श्रीराधा सर्वेश्वरो जयति

॥श्रीमते निम्बार्क महामुनीन्द्राय नमः॥

# हितोपदेश

## मुल मात्रम्

सम्पादक

कृष्णशरण पोखरेल 'शास्त्री'

प्रकाशक

श्रीहरिव्यास निकुंज मन्दिर, वृन्दावन
उ.प्र. भारत

# श्रीहितोपदेश

## प्रस्ताविका

सिद्धिः साध्ये सतामस्तु प्रसादात्तस्य धूर्जटेः।
जाह्नवीफेन लेखेव यन्मूर्ध्नि शशिनः कला ॥१॥
श्रुतो हितोपदेशोऽयं पाटवं संस्कृतोक्तिषु।
वाचां सर्वत्र वैचित्र्यं नीतिविद्यां ददाति च ॥२॥
अजरामरवत् प्राज्ञो विद्यामर्थं च चिन्तयेत्।
गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ॥३॥
सर्वद्रव्येषु विद्यैव द्रव्यमाहुरनुत्तमम्।
अहार्यत्वादनर्घत्वादक्षयत्वाच्च सर्वदा ॥४॥
संयोजयति विद्यैव नीचगापि नरं सरित्।
समुद्रमिव दुर्धर्षं नृपं भाग्यमतः परम् ॥५॥
विद्या ददाति विनयं विनयाद्याति पात्रताम्।
पात्रत्वाद्धनमाप्नोति धनाद्धर्मं ततः सुखम् ॥६॥
विद्या शस्त्रस्य शास्त्रस्य द्वे विद्ये प्रतिपत्तये।
आद्या हास्याय वृद्धत्वे द्वितीयाद्रियते सदा ॥७॥
यन्नवे भाजने लग्नः संस्कारो नान्यथा भवेत्।
कथाच्छलेन बालानां नीतिस्तदिह कथ्यते ॥८॥
मित्रलाभः सुहृद्भेदो विग्रहः संधिरेव च।
पञ्चतन्त्रात्तथाऽन्यस्माद् ग्रन्थादाकृष्य लिख्यते ॥९॥
अनेकसंशयोच्छेदि परोक्षार्थस्य दर्शकम्।

सर्वस्य लोचनं शास्त्रं यस्य नास्त्यन्ध एव सः ॥१०॥
यौवनं धनसंपत्तिः प्रभुत्वमविवेकिता।
एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ॥११॥
कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः।
काणेन चक्षुषा किं वा चक्षुःपीडैव केवलम् ॥११॥
अजातमृतमूर्खाणां वरमादौ न चान्तिमः।
सकृद्दुःखकरावाद्यावन्तिमस्तु पदे पदे ॥१३॥
वरं गर्भस्त्रावो वरमपि च नैवाभिगमनं
वरं जातः प्रेतो वरमपि च कन्यैव जनिता।
वरं वंध्या भार्या वरमपि च गर्भेषु वसति-
र्न चाऽविद्वान् रूपद्रविणगुणयुक्तोऽपि तनयः ॥१४॥
स जातो येन जातेन याति वंशः समुन्नतिम्।
परिवर्तिनि संसारे मृतः को वा न जायते ॥१५॥
गुणिगणगणनारम्भे न पतति कठिनी सुसंभ्रमाद्यस्य।
तेनाम्बा यदि सुतिनी वद वन्ध्या कीदृशी नाम ॥१६॥
दाने तपसि शौर्ये च यस्य न प्रथितं मनः।
विद्यायामर्थलाभे च मातुरुच्चार एव सः ॥१७॥
वरमेको गुणी पुत्रो न च मूर्खशतान्यपि।
एकश्चन्द्रस्तमो हन्ति न च तारागणारपि ॥१८॥
पुण्यतीर्थे कृतं येन तपः काप्यतिदुष्करम्।
तस्य पुत्रो भवेद्वश्यः समृद्धो धार्मिकः सुधीः ॥१९॥

अर्थागमो नित्यमरोगिता च
प्रिया च भार्या प्रियवादिनी च।
वश्यश्च पुत्रोऽर्थकरी च विद्या
षड् जीवलोकस्य सुखानि राजन्॥ २० ॥
को धन्यो बहुभिः पुत्रैः कुशूलापूरणाढकैः।
वरमेकः कुलालम्बी यत्र विश्रूयते पिता॥ २१ ॥
ऋणकर्ता पिता शत्रुर्माता च व्यभिचारिणी।
भार्या रूपवती शत्रुः पुत्रः शत्रुरपण्डितः॥ २२ ॥
अनभ्यासे विषं विद्या अजीर्णे भोजनं विषम्।
विषं सभा दरिद्रस्य वृद्धस्य तरुणी विषम्॥ २३ ॥
यस्य कस्य प्रसूतोऽपि गुणवान् पूज्यते नरः।
धनुर्वंशविशुद्धोऽपि निर्गुणः किं करिष्यति॥ २४ ॥
आहारनिद्रा भयमैथुनं च
सामान्यमेतत्पशुभिर्नराणाम्।
धर्मो हि तेषामधिको विशेषो
धर्मेण हीनाः पशुभिः समानाः॥ २५ ॥
धर्मार्थकाममोक्षाणां यस्यैकोऽपि न विद्यते।
अजागलस्तनस्येव तस्य जन्म निरर्थकम्॥ २६ ॥
आयुः कर्म च वित्तं च विद्या निधनमेव च।
पञ्चैतान्यपि सृज्यन्ते गर्भस्थस्यैव देहिन॥ २७ ॥
अवश्यंभाविनो भावा भवन्ति महतामपि।
नग्नत्वं नीलकण्ठस्य महाहिशयनं हरेः॥ २८ ॥

यदभावि न तद्भावि भावि चेन्न तदन्यथा।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते॥२९॥
न दैवमपि संचिन्त्य त्यजेदुद्योगमात्मनः।
अनुद्योगेन कस्तैलं तिलेभ्यः प्राप्तुमर्हति॥३०॥
उद्योगिनं पुरुषसिंहमुपैति लक्ष्मी-
र्दैवेन देयमिति कापुरुषा वदन्ति।
दैवं निहत्य कुरु पौरुषमात्मशक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः॥३१॥
यथा ह्येकेन चक्रेण न रथस्य गतिर्भवेत्।
एवं पुरुषकारेण विना दैवं न सिध्यति॥३२॥
पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते।
तस्मात्पुरुषकारेण यत्नं कुर्यादतन्द्रितः॥३३॥
यथा मृत्पिण्डतः कर्ता कुरुते यद्यदिच्छति।
एवमात्मकृतं कर्म मानवः प्रतिपद्यते॥३४॥
काकतालीयवत् प्राप्तं दृष्ट्वापि निधिमग्रतः।
न स्वयं दैवमादत्ते पुरुषार्थमपेक्षते॥३५॥
उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः॥३६॥
मातृपितृकृताभ्यासो गुणितामेति बालकः।
न गर्भच्युतिमात्रेण पुत्रो भवति पण्डितः॥३७॥
माता शत्रुः पिता वैरी येन बालो न पाठितः।

न शोभते सभामध्ये हंसमध्ये बको यथा ॥ ३८ ॥
रूपयौवनसंपन्ना विशालकुलसंभवाः ।
विद्याहीना न शोभन्ते निर्गन्धा इव किंशुकाः ॥ ३९ ॥
मूर्खोऽपि शोभते तावत् सभायां वस्त्रवेष्टितः ।
तावच्च शोभते मूर्खो यावत्किंचिन्न भाषते ॥ ४० ॥
काचः काञ्चनसंसर्गाद्धत्ते मारकतीं द्युतिम् ।
तथा सत्संनिधानेन मूर्खो यति प्रवीणताम् ॥ ४१ ॥
हीयते हि मतिस्तात हीनैः सह समागमात् ।
समैश्च समतामेति विशिष्टैश्च विशिष्टताम् ॥ ४२ ॥
नाद्रव्ये निहिता काचित्क्रिया फलवती भवेत् ।
न व्यापारशतेनापि शुकवत् पाठ्यते बकः ॥ ४३ ॥
अस्मिंस्तु निर्गुणं गोत्रे नापत्यमुपजायते ।
आकरे पद्मरागाणां जन्म काचमणेः कुतः ॥ ४४ ॥
कीटोऽपि सुमनःसङ्गादारोहति सतां शिरः ।
अश्मापि याति देवत्वं महद्भिः सुप्रतिष्ठितः ॥ ४५ ॥
यथोदयगिरेर्द्रव्यं संनिकर्षेण दीप्यते ।
तथा सत्संनिधानेन हीनवर्णोऽपि दीप्यते ॥ ४६ ॥
गुणा गुणज्ञेषु गुणा भवन्ति
ते निर्गुणं प्राप्य भवन्ति दोषाः ।
आस्वाद्यतोयाः प्रभवन्ति नद्यः
समुद्रमासाद्य भवन्त्यपेयाः ॥ ४७ ॥
। इति प्रस्ताविका ।

मित्रलाभः

काव्यशास्त्रविनोदेन कालो गच्छति धीमताम्।
व्यसनेन च मूर्खाणां निद्रया कलहेन वा॥१॥

असाधना वित्तहीना बुद्धिमन्तः सुहृत्तमाः।
साधन्त्याशु कार्याणि काककूर्ममृगाखुवत्॥२॥

शोकस्थानसहस्राणि भयस्थानशतानि च।
दिवसे दिवसे मूढमाविशन्ति न पण्डितम्॥३॥

उत्थायोत्थाय बोद्धव्यं महद्भयमुपस्थितम्।
मरणव्याधिशोकानां किमद्य निपतिष्यति॥४॥

कङ्कणस्य तु लोभेन मग्नः पङ्के सुदुस्तरे।
वृद्धव्याघ्रेण संप्राप्तः पथिकः स मृतो यथा॥५॥

अनिष्टादिष्टलाभेऽपि न गतिर्जायते शुभा।
यत्रास्ते विषसंसर्गोऽमृतं तदपि मृत्यवे॥६॥

न संशयमनारुह्य नरो भद्राणि पश्यति।
संशयं पुनरारुह्य यदि जीवति पश्यति॥७॥

इज्याऽध्ययनदानानि तपः सत्यं धृतिः क्षमा।
अलोभ इति मार्गोऽयं धमस्याष्टविधः स्मृतः॥८॥

तत्र पूर्वश्चतुर्वर्गो दम्भार्थमपि सेव्यते।
उत्तरस्तु चतुर्वर्गो महात्मन्येव तिष्ठति॥९॥

गतानुगतिको लोकः कुट्टनीमुपदेशिनीम्।
प्रमाणयति नो धर्मे यथा गोघ्नमपि द्विजम्॥१०॥

मरुस्थल्यां यथा वृष्टिः क्षुधार्ते भोजनं तथा।
दरिद्र दीयते दानं सफलं पाण्डुनन्दन॥११॥
प्राणा यथात्मनोऽभीष्टा भूतानामपि ते तथा।
आत्मौपम्येन भूतेषु दयां कुर्वन्ति साधवः॥१२॥
प्रत्याख्याने च दाने च सुखदुःखे प्रियाप्रिये।
आत्मौपम्येन पुरुषः प्रमाणमधिगच्छति॥१३॥
मातृवत्परदारेषु परद्रव्येषु लोष्टवत्।
आत्मवत्सर्वभूतेषु यः पश्यति सस पण्डितः॥१४॥
दरिद्रान्भर कौन्तेय मा प्रयच्छेश्वरे धनम्।
व्याधितस्यौषधं पथ्यं नीरुजस्य किमौषधै॥१५॥
दातव्यमिति यद्दानं दीयतेऽनुपकारिणे।
देशे काले च पात्रे च तद्दानं सात्त्विकं विदुः॥१६॥
न धर्मशास्त्रं पठतीति कारणं
न चापि वेदाध्ययनं दुरात्मनः।
स्वभाव एवात्र तथातिरिच्यते
यथा प्रकृत्या मधुरं गवां पयः॥१७॥
अवशेन्द्रियचित्तानां हस्तिस्नानमिव क्रिया।
दुर्भगाभरणप्रायो ज्ञानं भारः क्रियां विना॥१८॥
नदीनां शस्त्रपाणीनां नखिनां शृङ्गिणां तथा।
विश्वासो नैव कर्तव्यः स्त्रीषु राजकुलेषु च॥१९॥
सर्वस्य हि परीक्ष्यन्ते स्वभावा नेतरे गुणाः।
अतीत्य हि गुणान्स्वभावो मूर्ध्नि वर्तते॥२०॥

स हि गगनविहारी कल्मषध्वंसकारी
दशशतकरधारी ज्योतिषां मध्यचारी।
विधुरपि विधियोगाद् ग्रस्यते राहुणासौ
लिखितमपि ललाटे प्रोज्झितुं कः समर्थः॥२१॥
सुजीर्णमन्नं सुविचक्षणः सुतः
सुशासिता स्त्री नृपतिः सुसेवितः।
सुचिन्त्य चोक्तं सुविचार्य यत्कृतं
सुदीर्घकालेऽपि न याति विक्रियाम्॥२२॥
वृद्धानां वचनं ग्राह्यमापत्काले ह्युपस्थिते।
सर्वत्रैव विचारे तु भोजनेऽप्यप्रवर्तनम्॥२३॥
शङ्काभिः सर्वमाक्रान्तमन्नं पानं च भूतले।
प्रवृत्तिः कुत्र कर्तव्या जीवितव्यं कथं नु वा॥२४॥
ईर्ष्यी घृणी त्वसंतुष्टः क्रोधनो नित्यशङ्कितः।
परभाग्योपजीवी च षडेते दुःखभागिनः॥२५॥
सुमहान्त्यपि शास्त्राणि धारयन्तो बहुश्रुताः।
छेत्तारः संशयानां च क्लिश्यन्ते लोभमोहिताः॥२६॥
लोभात्क्रोधः प्रभवति लोभात्कामः प्रजायते।
लोभान्मोहश्च नाशश्च लोभः पापस्य कारणम्॥२७॥
असंभवं हेममृगस्य जन्म
तथापि रामो लुलुभे मृगाय।
प्रायः समापन्नविपत्तिकाले
धियोऽपि पुंसां मलिना भवन्ति॥२८॥

न गणस्याग्रतो गच्छेत्सिद्धे कार्ये समं फलम्।
यदि कार्यविपत्तिः स्यान्मुखरस्तत्र हन्यते॥ २९ ॥
आपदामपतन्तीनां हितोऽप्यायाति हेतुताम्।
मातृजंघा हि वत्सस्य स्तम्भीभवति बन्धने॥ ३० ॥
स बन्धुर्यो विपन्नानामापदुद्धरणक्षमः।
न तु भीतपरित्राणवस्तूपालम्भपण्डितः॥ ३१ ॥
विपदि धैर्यमथाभ्युदये क्षमा
सदसि वाक्पटुता युधि विक्रमः।
यशसि चाभिरुचिर्व्यसनं श्रुतौ
प्रकृतिसिद्धमिदं हि महात्मनाम्॥ ३२ ॥
संपदि यस्य न हर्षो विपदि
विषादो रणे च धीरत्वम्।
तं भुवनत्रयतिलकं जनयति
जननी सुतं बिरलम्॥ ३३ ॥
षड्दोषाः पुरुषेणेह हातव्या भूतिमिच्छता।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीघसूत्रता॥ ३४ ॥
अल्पानामपि वस्तूनां संहातेः कार्यसाधिका।
तृणैर्गुणत्वमापन्नैर्बध्यन्ते मत्तदन्तिनः॥ ३५ ॥
संहतिः श्रेयसी पुंसां स्वकुलैरल्पकैरपि।
तुषेणापि परित्यक्ता न प्ररोहन्ति तण्डुलाः॥ ३६ ॥
संहतास्तु हरन्त्येते मम जालं विहंगमाः।
यदा तु निपतिष्यन्ति वशमेष्यन्ति मे तदा॥ ३७ ॥

माता मित्रं पिता चेति स्वभावात्रितयं हितम्।
कार्यकारणतश्चान्ये भवन्ति हितबुद्धयः ॥ ३८ ॥
यस्य मित्रेण संभाषो यस्य मित्रेण संस्थितिः।
यस्य मित्रेण संलापस्ततो नास्तीह पुण्यवान् ॥ ३९ ॥
यस्माच्च येन च यथा च यदा च यच्च
यावच्च यत्र च शुभाशुभमात्मकर्म।
तस्माच्च तेन च तथा च तदा च तच्च
तावच्च तत्र च विधतृवशादुपैति ॥ ४० ॥
रोगशोकपरीतापबन्धनव्यसनानि च।
आत्मापराधवृक्षाणां फलान्येतानि देहिनाम् ॥ ४१ ॥
आपदर्थे धनं रक्षेद्दारान्रक्षेद्धनैरपि।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ ४२ ॥
धर्मार्थकाममोक्षाणां प्राणाः संस्थितिहेतवः।
तान्निघ्नता किं न हतं रक्षता किं न रक्षितम् ॥ ४३ ॥
धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत्।
सन्निमित्ते वरं त्यागो विनाशे नियते सति ॥ ४४ ॥
जातिद्रव्यगुणानां च साम्यमेषां मया सह।
मत्प्रभुत्वफलं ब्रूहि कदा किं तद्भविष्यति ॥ ४५ ॥
विना वर्तनमेवैते न त्यजन्ति ममान्तिकम्।
तन्मे प्राणव्ययेनापि जीवयैतान्ममाश्रितान् ॥ ४६ ॥
मांसमूत्रपुरीषास्थिनिर्मितेऽस्मिन्कलेवरे।
विनश्वरे विहायास्थां यशः पालय मित्र मे ॥ ४७ ॥

यदि नित्यमनित्येन निर्मलं मलवाहिना।
यशः कायेन लभ्येत तन्न लब्धं भवेन्नु किम्॥४८॥
शरीरस्य गुणानां च दूरमत्यन्तमन्तरम्।
शरीरं क्षणविध्वंसि कल्पान्तस्थायिनो गुणाः॥४९॥
योऽधिकाद्योजनशतात्पश्यतीहामिषं खगः।
स एव प्राप्तकालस्तु पाशबन्धं न पश्यति॥५०॥
शशिदिवाकरयोर्ग्रहपीडनं
गजभुजंगमयोरपि बन्धनम्।
मतिमता च विलोक्य दरिद्रतां
विधिरहो बलवानिति मे मतिः॥५१॥
व्योमैकान्तविहारिणोऽपि विहगाः संप्राप्नुवन्त्यापदं
बध्यन्ते निपुणैरगाधसलिलान्मत्स्याः समुद्रादपि।
दुर्नीतं किमिहास्ति किं सुचरितं कः स्थानलाभे गुणः
कालो हि व्यसनप्रसारितकरो गृह्णाति दूरादपि॥५२॥
यानि कानि च मित्राणि कर्तव्यानि शतानि च।
पश्य मूषकमित्रेण कपोता मुक्तबन्धनाः॥५३॥
यद्येन युज्यते लोके बुधस्तत्तेन योजयेत्।
अहमन्नं भवान् भोक्ता कथं प्रीतिर्भविष्यति॥५४॥
भक्ष्यभक्षकयोः प्रीतिर्विपत्तेरेव कारणम्।
शृगालात्पाशबद्धोऽसौ मृगः काकेन रक्षितः॥५५॥
अज्ञातकुलशीलस्य वासो देयो न कस्यचित्।
मार्जारस्य हि दोषेण हतो गृध्रो जरद्गवः॥५६॥

तावद्भयस्य भेतव्यं यावद्भयमनागतम्।
आगतं तु भयं वीक्ष्य नरः कुर्याद्यथोचितम्॥५७॥
जातिमात्रेण किं कश्चिद्धन्यते पूज्यते क्वचित्।
व्यवहारं परिज्ञाय वध्यः पूज्योऽथवा भवेत्॥५८॥
अरावप्युचितं कार्यमातिथ्यं गृहमागते।
छेत्तुः पार्श्वगतां छायां नोपसंहरते द्रुमः॥५९॥
तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन॥६०॥
निर्गुणेष्वपि सत्त्वेषु दयां कुर्वन्ति साधवः।
न हि संहरते ज्योत्स्नां चन्द्रश्चाण्डालवेश्मनः॥६१॥
अतिथिर्यस्य भग्नाशो गृहात्प्रतिनिवर्तते।
स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति॥६२॥
उत्तमस्यापि वर्णस्य नीचोऽपि गृहमागतः।
पूजनीयो यथायोग्यं सर्वदेवमयोऽतिथिः॥६३॥
सर्वहिंसानिवृत्ता ये नराः सर्वसहाश्च ये।
सर्वस्याश्रयभूताश्च ते नराः स्वर्गगागिनः॥६४॥
एक एव सुहृद्धर्मो निधनेऽप्यनुयाति यः।
शरीरेण समं नाशं सर्वमन्यत्तु गच्छति॥६५॥
योऽत्ति यस्य यदा मांसमुभयोः पश्यतान्तरम्।
एकस्य क्षणिका प्रीतिरन्यः प्राणैर्विमुच्यते॥६६॥
मर्तव्यमिति यद्दुःखं पुरुषस्योपजायते।
शक्यते नानुमानेन परेण परिवर्णितुम्॥६७॥

स्वच्छन्दवनजातेन शाकेनापि प्रपूर्यते।
अस्य दग्धोदरस्यार्थे कः कुर्यात्पातकं महत्॥६८॥
यत्र विद्वज्जनो नास्ति श्लाघ्यस्तत्राल्पधीरपि।
निरस्तपादपे देशे एरण्डोऽपि द्रुमायते॥६९॥
अयं निजः परो वेति गणना लघुचेतसाम्।
उदारचरितानां तु वसुधैव कुटुम्बकम्॥७०॥
न कश्चित्कस्यचिन्मित्रं न कश्चित्कस्यचिद्रिपुः।
व्यवहारेण मित्राणि जायन्ते रिपवस्तथा॥७१॥
आपत्सु मित्रं जानीयाद्युद्धे शूरमृणे शुचिम्।
भार्यां क्षीणेषु वित्तेषु व्यसनेषु च बान्धवान्॥७२॥
उत्सवे व्यसने चैव दुर्भिक्षे राष्ट्रविप्लवे।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः॥७३॥
सुहृदां हितकामानां यः शृणोति न भाषितम्।
विपत्संनिहितां तस्य स नरः शत्रुनन्दनः॥७४॥
अपराधो न मेऽस्तीति नैतद्विश्वासकारणम्।
विद्यते हि नृशंसेभ्यो भयं गुणवतामपि॥७५॥
दीपनिर्वाणगन्धं च सुहृद्वाक्यमरुन्धतीम्।
न जिघ्रन्ति न शृण्वन्ति न पश्यन्ति गतायुषः॥७६॥
परोक्षे कार्यहन्तारं प्रत्यक्षे प्रियवादिनम्।
वर्जयेत्तादृशं मित्रं विषकुम्भं पयोमुखम्॥७७॥
संलापितानां मधुरैर्वचोभि-
र्मिथ्योपचारैश्च वशीकृतानाम्।

आशावतां श्रद्दधतां च लोके
किमर्थिनां वञ्चयितव्यमस्ति ॥७८ ॥
उपकारिणि विश्रब्धे शुद्धमतौ यः समाचरति पापम् ।
तं जनमसत्यसंधं भगवति वसुधे कथं वहसि ॥७९ ॥
दुर्जनेन समं सख्यं प्रीतिं चापि न कारयेत् ।
उष्णो दहति चाङ्गारः शीतः कृष्णायते करम् ॥८० ॥
प्राक्पादयोः पतति खादति पृष्ठमांसं
कर्णे कलं किमपि रौति शनैर्विचित्रम् ।
छिद्रं निरूप्य सहसा प्रविशत्यशङ्कः
सर्वं खलस्य चरितं मशकः करोति ॥८१ ॥
दुर्जनः प्रियवादी च नैतद्विश्वासकारणम् ।
मधु तिष्ठति जिह्वाग्रे हृदि हालाहलं विषम् ॥८२ ॥
त्रिभिर्वर्षैस्त्रिभिर्मासैस्त्रिभिः पक्षैस्त्रिभिर्दिनैः
अत्युत्कटैः पापपुण्यैरिहैव फलमश्नुते ॥८३ ॥
भक्षितेनापि भवता नाहारो मम पुष्कलः ।
त्वयि जीवति जीवामि चित्रग्रीव इवानघ ॥८४ ॥
तिरश्चामपि विश्वासो दृष्टः पुण्यैककर्मणाम् ।
सतां हि साधुशीलत्वात्स्वभावो न निवर्तते ॥८५ ॥
साधोः प्रकोपितस्यापि मनो नायाति विक्रियाम् ।
न हि तापयितुं शक्यं सागराम्भस्तृणोल्कया ॥८६ ॥
मार्जारो महिषो मेषः काकः कापुरुषस्तथा ।
विश्वासात्प्रभवन्त्येते विश्वासस्तत्र नोचितः ॥८७ ॥

शत्रुणां न हि संदध्यात् सुश्लिष्टेनापि संधिना।
सुतप्तमपि पानीयं शमयत्येव पावकम् ॥८८ ॥
दुर्जनः परिहर्तव्यो विद्ययालंकृतोऽपि सन्।
मणिना भूषितः सर्पः किमसौ न भयङ्करः ॥८९ ॥
यदशक्यं न तच्छक्यं यच्छक्यं शक्यमेव तत्।
नोदके शकटं याति न च नौर्गच्छति स्थले ॥९० ॥
महताप्यर्थसारेण यो विश्वसिति शत्रुषु।
भार्यासु च विरक्तासु तदन्तं तस्य जीवनम् ॥९१ ॥
मृद्घटवत् सुखभेद्यो दुःसंधानश्च दुर्जनो भवति।
सुजनस्तु कनकघटवद्दुर्भेद्यश्चाशु संधेयः ॥९२ ॥
द्रवत्वात्सर्वलोहानां निमित्तान्मृगपक्षिणाम्।
भयाल्लोभाच्च मूर्खाणां संगतं दर्शनात्सताम् ॥९३ ॥
नारिकेलसमाकारा दृश्यन्ते हि सुहृज्जनाः।
अन्ये बदरिकाकारा बहिरेव मनोहराः ॥९४ ॥
स्नेहच्छेदेऽपि साधूनां गुणा नायान्ति विक्रियाम्।
भङ्गेऽपि हि मृणालानामनुबध्नन्ति तन्तवः ॥९५ ॥
शुचित्वं त्यागिता शौर्यं सामान्यं सुखदुःखयोः।
दाक्षिण्यं चानुरक्तिश्च सत्यता च सुहृद्गुणाः ॥९६ ॥
घर्मार्तं न तथा सुशीतलजलैः स्नानं न मुक्तावली
न श्रीखण्डविलेपनं सुखयति प्रत्यङ्गमप्यर्पितम्।
प्रीत्या सज्जनभाषितं प्रभवति प्रायो यथा चेतसः
सद्युक्त्या च पुरस्कृतं सुकृतिनामाकृष्टिमन्त्रोपमम् ॥९७ ॥

रहस्यभेदो याच्ञा च नैष्ठुर्यं चलचित्तता।
क्रोधो निःसत्यता द्यूतमेतन्मित्रस्य दूषणम्॥९८॥
पटुत्वं सत्यवादित्वं कथायोगेन बुध्यते।
अस्तब्धत्वमचापल्यं प्रत्यक्षेणावगम्यते॥९९॥
अन्यथैव हि सौहार्दं भवेत्स्वच्छान्तरात्मनः।
प्रवर्ततेऽन्यथा वाणी शाठ्योपहतचेतसः॥१००॥
मन्यस्यन्यद्वचस्यन्यत् कार्यमन्यद्दुरात्मनाम्।
मनस्येकं वचस्येकं कमण्येकं महात्मनाम्॥१०१॥
चलत्येकेन पादेन तिष्ठत्येकेन बुद्धिमान्।
नाऽसमीक्ष्य परं स्थानं पूर्वमायतनं त्यजेत्॥१०२॥
परोपदेशे पाण्डित्यं सर्वेषां सुकरं नृणाम्।
धर्मे स्वीमनुष्ठानं कस्यचित्तु महात्मनः॥१०३॥
यस्मिन्देशे न संमानो न वृत्तिर्न च बान्धवः।
न च विद्यागमः कश्चित्तं देशे परिवर्जयेत्॥१०४॥
लोकयात्राऽभयं लज्जा दाक्षिण्यं त्यागशीलता।
पञ्च यत्र न विद्यन्ते न कुर्यात्तत्र संस्थितिम्॥१०५॥
तत्र मित्र न वस्तव्यं यत्र नास्ति चतुष्टयम्।
ऋणदाता च वैद्यश्च श्रोत्रियः सजला नदी॥१०६॥
बालो वा यदि वा वृद्धो युवा वा गृहमागतः।
तस्य पूजा विधातव्या सर्वस्याभ्यागतो गुरुः॥१०७॥
गुरुरग्निर्द्विजातिनां वर्णानां ब्राह्मणो गुरुः।
पतिरेको गुरुः स्त्रीणां सर्वस्याभ्यागतो गुरुः॥१०८॥

अकस्माद्युवती वृद्धं केशेष्वाकृष्य चुम्बति।
पतिं निर्दयमालिङ्ग्य हेतुरत्र भविष्यति॥१०९॥
शशिनीव हिमार्तानां घर्मार्तानां रवाविव।
मनो न रमते स्त्रीणां जराजीर्णेन्द्रिये पतौ॥११०॥
पतितेषु हि दृष्टेषु पुसः का नाम कामिता।
भैषज्यमिव मन्यन्ते यदन्यमनसः स्त्रियः॥१११॥
धनाशा जीविताशा च गुर्वी प्राणभृतां सदा।
वृद्धस्य तरुणी भर्या प्राणेभ्योऽपि गरीयसी॥११२॥
नोपभोक्तुं न च त्यक्तुं शक्नोति विषयाञ्जरी।
अस्थि निर्दशनः श्वेव जिह्वया लेढि केवलम्॥११३॥
स्वातन्त्र्यं पितृमन्दिरे निवसतिर्यात्रोत्सवे संगति-
र्गोष्ठी पूरुषसंनिधावनियमो वासो विदेशे तथा।
संसर्गः सह पुंश्चलीभिरसकृद्वृत्तेर्निजायाः क्षतिः
पत्युर्वार्धकमीर्षितं प्रवसनं नाशस्य हेतुः स्त्रियः॥११४॥
पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम्।
स्वप्नश्चान्यगृहे वासो नारीणां दूषणानि षट्॥११५॥
स्थानं नास्ति क्षणं नास्ति नास्ति प्रार्थयिता नरः।
तेन नारद नारीणां सतीत्वमुपजायते॥११६॥
न स्त्रीणामप्रियः कश्चित्प्रियो वापि न विद्यते।
गावस्तृणमिवारण्ये प्रार्थयन्ति नवं नवम्॥११७॥
घृतकुम्भसमा नारी तप्ताङ्गारसमः पुमान्।
तस्माद्घृतं च वह्निं च नैकत्र स्थापयेद्बुधः॥११८॥

मात्रा स्वस्त्रा दुहित्रा वा नो विविक्तासनो भवेत्।
बलवानिन्द्रियग्रामो विद्वांसमपि कर्षति ॥११९॥
न लज्जा न विनीतत्वं न दाक्षिण्यं न भीरुता।
प्रार्थनाभाव एवैकं सतीत्वे कारणं स्त्रियाः ॥१२०॥
पिता रक्षति कौमारे भर्ता रक्षति यौवने।
पुत्रश्च स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति ॥१२१॥
उशना वेद यच्छास्त्रं यच्च वेद बृहस्पतिः।
स्वभावेनैव तच्छास्त्रं स्त्रीबुद्धौ सुप्रतिष्ठितम् ॥१२२॥
धनवान् बलवाँल्लोके सर्वः सर्वत्र सर्वदा।
प्रभुत्वं धनमूलं हि राज्ञामप्युपजायते ॥१२३॥
धनेन बलवाँल्लोके धनाद्भवति पण्डितः।
पश्यैनं मूषिकं पापं स्वजातिसमतां गतम् ॥१२४॥
अर्थेन तु विहीनस्य पुरुषस्याल्पमेधसः।
क्रियाः सर्वा विनश्यन्ति ग्रीष्मे कुसरितो यथा ॥१२५॥
यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः।
यस्यार्थाः स पुमाँल्लोके यस्यार्थाः सहि पण्डितः ॥१२६॥
अपुत्रस्य गृहं शून्यं सन्मित्ररहितस्य च।
मूर्खस्य च दिशः शून्याः सर्वशून्या दरिद्रता ॥१२७॥
दारिद्र्यान्मरणाद्वापि दारिद्र्यमवरं स्मृतम्।
अल्पक्लेशेन मरणं दारिद्र्यमतिदुःसहम् ॥१२८॥
तानीन्द्रियाण्यविकलानि तदेव नाम
सा बुद्धिरप्रतिहता वचनं तदेव।

अर्थोष्मणा विरहितः पुरुषः स एव
अन्यः क्षणेन भवतीति विचित्रमेतत् ॥१२९॥
अर्थनाशं मनस्तापं गृहे दुश्चरितानि च।
वञ्चनं चापमानं च मतिमान्न प्रकाशयेत ॥१३०॥
आयुर्वित्तं गृहच्छिद्रं मन्त्र मैथुनभेषजम्।
तपो दानापमानं च नव गोप्यानि यत्नतः ॥१३१॥
अत्यन्तविमुखे दैवे व्यर्थे यत्ने च पौरुषे।
मनस्विनो दरिद्रस्य वदादन्यत्कुतः सुखम् ॥१३२॥
मनस्वी म्रियते कामं कार्पण्यं न तु गच्छति।
अपि निर्वाणमायाति नानलो याति शीतताम् ॥१३३॥
कुसुमस्तवकस्येव द्वे वृत्ती तु मनस्विनः।
सर्वेषां मूर्ध्नि वा तिष्ठेद्विशीर्येत वनेऽथवा ॥१३४॥
वरं विभवहीनेन प्राणैः संतर्पितोऽनलः।
नोपचारपरिभ्रष्टः कृपणः प्रार्थितो जनः ॥१३५॥
दारिद्र्याद्ध्रियमेति ह्रीपरिगतः सत्त्वात्परिभश्यते
निःसत्त्वः परिभूयते परिभवान्निर्वेदमापद्यते।
निर्विण्णः शुचमेति शोकनिहतो बुद्ध्या परित्यज्यते
निर्बुद्धिः क्षयमेत्यहो निधनता सर्वापदामास्पदम् ॥१३६॥
वरं मौनं कार्यं न च वचनमुक्तं यदनृतं
वरं क्लैब्यं पुंसां न च परकलत्राभिगमनम्।
वरं प्राणत्यागो न च पिशुनवाक्येष्वभिरुचि-
र्वरं भिक्षाशित्वं न च परधनास्वादनसुखम् ॥१३७॥

वरं शून्या शाला न च खलु वरो दुष्टवृषभो
वरं वेश्या पत्नी न पुनरविनीता कुलवधूः।
वरं वासोऽरण्ये न पुनरविवेकाधिपपुरे
वरं प्राणत्यागो न पुनरधमानामुपगमः॥१३८॥
सेवेव मानमखिलं ज्योत्स्नेव तमो जरेव लावण्यम्।
हरिहरकथेव दुरितं गुणशतमप्यर्थिता हरति॥१३९॥
पल्लवग्राहि पाण्डित्यं क्रयक्रीतं च मैथुनम्।
भोजनं च पराधीनं तिस्रः पुंसां विडम्बनाः॥१४०॥
रोगी चिरप्रवासी परान्नभोजी परावसथशायी।
यज्जीवति तन्मरणं यन्मरणं सोऽस्य विश्रामः॥१४१॥
लोभेन बुद्धिश्चलति लोभो जनयते तृषाम्।
तृषार्तो दुःखमाप्नोति परत्रेह च मानवः॥१४२॥
धनलुब्धो ह्यसंतुष्टोऽनियतात्माऽजितेन्द्रियः।
सर्वा एवापदस्तस्य यस्य तुष्टं न मानसम्॥१४३॥
सर्वाः संपत्तयस्तस्य संतुष्टं यस्य मानसम्।
उपानद्गुढपादस्य ननु चर्मावृतेव भूः॥१४४॥
संतोषामृततृप्तानां यत्सुखं शान्तचेतसाम्।
कुतस्तद्धनलुब्धानामितश्चेतश्च धावताम्॥१४५॥
तेनाधीतं श्रुतं तेन तेन सर्वमनुष्ठितम्।
येनाशाः पृष्ठतः कृत्वा नैराश्यमवलम्बितम्॥१४६॥
असेवितेश्वरद्वारमदृष्टविरहव्यथाम्।
अनुक्तक्लीबवचनं धन्यं कस्यापि जीवनम्॥१४७॥

न योजनशतं दूरं वाह्यमानस्य तृष्णया।
संतुष्टस्य करप्राप्तेऽप्यर्थे भवति नादरः ॥१४८॥
को धर्मो भूतदया किं सौख्यमरोगिता जगति जन्तोः।
कः स्नेहः सद्भावः किं पाण्डित्यं परिच्छदः ॥१४९॥
परिच्छेदो हि पाण्डित्यं यदापन्ना विपत्तयः।
अपरिच्छेदकर्तृणां विपदः स्युः पदे पदे ॥१५०॥
त्यजेदेकं कुलस्यार्थे ग्रामस्यार्थे कुलं त्यजेत्।
ग्रामं जनपदस्यार्थे स्वात्मार्थे पृथिवीं त्यजेत् ॥१५१॥
पानीयं वा निरायासं स्वाद्वन्नं मा भयोत्तरम्।
विचार्य खलु पश्यामि तत्सुखं यत्र निर्वृतिः ॥१५२॥
वरं वनं व्याघ्रगजेन्द्रसेवितं
द्रुमालयं पक्वफलाम्बुभोजनम्।
तृणानि शय्या परिधानवल्कलं
न बन्धुमध्ये धनहीनजीवनम् ॥१५३॥
संसारविषवृक्षस्य द्वे एव रसवत्फले।
काव्यामृतरसास्वादः संगमः सुजनैः सह ॥१५४॥
अर्थाः पादरजोपमा गिरिनदीवेगोपमं यौवन-
मायुष्यं जललोलविन्दुचपलं फेनोपमं जीवितम्।
धर्मं यो न करोति निन्दितमतिः स्वर्गार्गलोद्घाटनं
पश्चात्तापयुतो जरापरिगतः शोकाग्निना दह्यते ॥१५५॥
उपार्जितानां वित्तानां त्याग एव हि रक्षणम्।
तडागोदरसंस्थानां परीवाह इवाम्भसाम् ॥१५६॥

यदधोऽधः क्षितौ वित्तं निचखान मितंपचः।
तदधोनिलयं गन्तु चक्रे पन्थानमग्रतः ॥१५७॥
निजसौख्यं निरुन्धानो यो धनार्जनमिच्छति।
परार्थभारवाहीव क्लेशस्यैव हि भाजनम् ॥१५८॥
दानोपभोगहीनेन धनेन धनिनो यदि।
भवामः किं न तेनैव धनेन धनिनो वयम् ॥१५९॥
न देवाय न विप्राय न बन्धुभ्यो न चात्मने।
कृपणस्य धनं याति वह्नितस्करपार्थिवैः ॥१६०॥
दानं भोगो नाशस्तिस्रो गतयो भवन्ति वित्तस्य।
यो न ददाति न भुङ्क्ते तस्य तृतीया गतिर्भवति ॥१६१॥
असंभोगेन सामान्यं कृपणस्य धनं परैः।
अस्येदमिति संबन्धो हानौ दुःखेन गम्यते ॥१६२॥
दानं प्रियवाक्सहितं ज्ञानमगर्वं क्षमान्वितं शौर्यम्।
वित्तं त्यागनियुक्तं दुर्लभमेतच्चतुष्टयं लोके ॥१६३॥
कर्तव्यः संचयो नित्यं कर्तव्यो नातिसंचयः।
पश्य संचयशीलोऽसौ धनुषा जम्बुको हतः ॥१६४॥
जलमग्निर्विषं शस्त्रं क्षुद्व्याधिः पतनं गिरेः।
निमित्तं किंचिदासाद्य देही प्राणैर्विमुच्यते ॥१६५॥
अचिन्तितानि दुःखानि यथैवायान्ति देहिनाम्।
सुखान्यपि तथा मन्ये दैवमत्रातिरिच्यते ॥१६६॥
मासमेकं नरो याति द्वौ मासौ मृगशूकरौ।
अहिरेकं दिनं याति अद्य भक्ष्यो धनुर्गुणः ॥१६७॥

यद्ददाति यदश्नाति तदेव धनिनो धनम्।
अन्ये मृतस्य क्रीडन्ति दारैरपि धनैरपि॥१६८॥
यद्ददासि विशिष्टेभ्यो यच्चाश्नासि दिने दिने।
तत्ते वित्तमहं मन्ये शेषं कस्यापि रक्षसि॥१६९॥
नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम्।
आपत्स्वपि न मुह्यन्ति नराः पण्डितबुद्धयः॥१७०॥
शास्त्रण्यधीत्यापि भवन्ति मूर्खा
यस्तु क्रियावान् पुरुषः स विद्वान्।
सुचिन्तितं चौषधमातुराणां
न नाममात्रेण करोत्यरोगम्॥१७१॥
न स्वल्पमप्यध्यवसायभीरोः
करोति विज्ञानविधिर्गुणं हि।
अन्धस्य किं हस्ततलस्थितोऽपि
प्रकाशयत्यर्थमिह प्रदीपः॥१७२॥
राजा कुलवधूर्विप्रा मन्त्रिणश्च पयोधराः।
स्थानभ्रष्टा न शोभन्ते दन्ताः केशा नखा नराः॥१७३॥
स्थानमुत्सृज्य गच्छन्ति सिंहाः सत्पुरुषा गजाः।
तत्रैव निधनं यान्ति काकाः कापुरुषा मृगाः॥१७४॥
को वीरस्य मनस्विनः स्वविषयः को वा विदेशस्तथा
यं देशे श्रयते तमेव कुरुते बाहुप्रतापार्जितम्।
यद्द्रंष्ट्रानखलाङ्गलप्रहरणः सिंहो वनं गाहते
तस्मिन्नेव हतद्विपेन्द्ररुधिरैस्तृष्णां छिनत्त्यात्मनः॥१७५॥

निपानमिव मण्डूकाः सरः पूर्णमिवाण्डजाः।
सोद्योगं नरमायान्ति विवशाः सर्वसंपदः॥१७६॥
सुखमापतितं सेव्यं दुःखमापतितं तथा।
चक्रवत् परिवर्तन्ते दुःखानि च सुखानि च॥१७७॥
उत्साहसंपन्नमदीर्घसूत्रं
क्रियाविधिज्ञं व्यसनेष्वसक्तम्।
शूरं कृतज्ञं दृढसौहृदं च
लक्ष्मीः स्वयं याति निवासहेतोः॥१७८॥
विनाप्यर्थैर्वीरः स्पृशति बहुमानोन्नतिपदं
समायुक्तोऽप्यर्थैः परिभवपदं याति कृपणः।
स्वभावादुद्भूतां गुणसमुदयावाप्तिविषयां
द्युतिं सैहीं किं श्वा घृतकनकमालोऽपि लभते॥१७९॥
धनवानिति हि मदो मे किं गतविभवो विषादमुपयामि।
करनिहतकन्दुकसमाः पातोत्पाता मनुष्याणाम्॥१८०॥
अभ्रच्छाया खलप्रीतिर्नवसस्यानि योषितः।
किंचित्कालोपभोग्यानि यौवनानि धनानि च॥१८१॥
वृत्त्यर्थं नातिचेष्टेत सा हि धात्रैव निर्मिता।
गर्भादुत्पतिते जन्तौ मातुः प्रस्त्रवतः स्तनौ॥१८२॥
येन शुक्लीकृता हंसाः शुकाश्च हरितीकृताः।
मयूराश्चित्रिता येन स ते वृत्तिं विधास्यति॥१८३॥
जनयन्त्यर्जने दुःखं तापयन्ति विपत्तिषु।
मोहयन्ति च संपत्तौ कथमर्थाः सुखावहाः॥१८४॥

धर्मार्थं यस्य वित्तेहा वरं तस्य निरीहता।
प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्॥१८५॥
यथा ह्यामिषमाकाशे पक्षिभिः श्वापदैर्भुवि।
भक्ष्यते सलिले नक्रैस्तथ सर्वत्र वित्तवान्॥१८६॥
राजतः सलिलादग्नेश्चोरतः स्वजनादपि।
भयमर्थवतां नित्यं मृत्योः प्राणभृतामिव॥१८७॥
जन्मनि क्लेशबहुले किं नु दुःखमतः परम्।
इच्छासंपद्यतो नास्ति यच्चेच्छा न निवर्तते॥१८८॥
धनं तावदसुलभं लब्धं कृच्छ्रेण रक्ष्यते।
लब्धनाशो यथा मृत्युस्तस्मादेतन्न चिन्तयेत्॥१८९॥
तृष्णां चेह परित्यज्य को दरिद्रः क ईश्वरः।
तस्याश्चेत्प्रसरो दत्तो दास्यं च शिरसि स्थितम्॥१९०॥
यद्यदेव हि वाञ्छेत ततो वाञ्छा प्रवर्तते।
प्राप्त एवार्थः सोऽर्थो यतो वाञ्छा निवर्तते॥१९१॥
आमरणान्ताः प्रणयाः कोपास्तत्क्षणभङ्गुराः।
परित्यागाश्च निःसङ्गा भवन्ति हि महात्मनाम्॥१९२॥
सन्त एवं सतां नित्यमापदुद्धरणक्षमाः।
गजानां पङ्कमग्नां गजा एव धुरंधराः॥१९३॥
श्लाघ्यः स एको भुवि मानवानां
स उत्तमः सत्पुरुषः स धन्यः।
यस्यार्थिनो वा शरणागता वा
नाशाभिभङ्गाद्विमुखाः प्रयान्ति॥१९४॥

औरसं कृतसंबन्धं तथा वंशक्रमागतम्।
रक्षितं व्यसनेभ्यश्च मित्रं ज्ञेयं चतुर्विधम्॥१९५॥
अम्भांसि जलजन्तूनां दुर्गं दुर्गनिवासिनाम्।
स्वभूमिः श्वापदादीनां राज्ञां मन्त्री परं बलम्॥१९६॥
स्वयं वीक्ष्य यथा बध्वाः पीडितं कुचकुड्मलम्।
वणिक्पुत्रोऽभवद्दुःखी त्वं तथैव भविष्यसि॥१९७॥
सन्मार्गे तावदास्ते प्रभवति पुरुषस्तावदेवेन्द्रियाणां
लज्जां तावद्विधत्ते विनयमपि समालम्बते तावदेव।
भ्रूचापाकृष्टमुक्ताः श्रवणपथगता नीलपक्ष्माण एते
यावल्लीलावतीनां न हृदि धृतिमुषो दृष्टिबाणाः पतन्ति॥१९८॥
असत्यं साहसं माया मात्सर्यं चातिलुब्धता।
निर्गुणत्वमशौचत्वं स्त्रीणां दोषाः स्वभावजाः॥१९९॥
सा भर्या या गृहे दक्षा सा भार्या या प्रजावती।
सा भार्या या पतिप्राणा सा भार्या या पतिव्रता॥२०१॥
न सा भार्येति वक्तव्या यस्या भर्ता न तुष्यति।
तुष्टे भर्तरि नारीणां संतुष्टाः सर्वदेवताः॥२०१॥
उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः।
शृगालेन हतो हस्ती गच्छता पङ्कवर्त्मना॥२०२॥
यः कुलाभिजनाचारैरतिशुद्धः प्रतापवान्।
धार्मिको नीतिकुशलः स स्वामी युज्यते भुवि॥२०३॥
राजानं प्रथमं विन्देत्ततो भार्यां ततो धनम्।
राजन्यसति लोकेऽकुतो भर्या कुतो धनम्॥२०४॥

पर्जन्य इव भूतानामाधरः पृथिवीपतिः।
विकलेऽपि हि पर्जन्ये जीव्यते न तु भूपतौ ॥२०५॥
नियतविषयवर्ती प्रायशो दण्डयोगा-
ज्जगति परवशेऽस्मिन्दुर्लभः साधुवृत्तः।
कृशमपि विकलं वा व्याधितं वाऽधनं वा
पतिमपि कुलनारी दण्डभीत्याऽभ्युपैति ॥२०६॥
यदाऽसत्सङ्गरहितो भविष्यसि भविष्यसि।
तदाऽसज्जनगोष्ठीषु पतिष्यसि पतिष्यसि ॥२०७॥
एकस्य दुःखस्य न यावदन्तं
गच्छाम्यहं पारमिवार्णवस्य।
तावद्द्वितीयं समुपस्थितं मे
छिद्रेष्वनर्था बहुलीभवन्ति ॥२०८॥
स्वाभाविकं तु यन्मित्रं भाग्येनैवाभिजायते।
तदकृत्रिमसौहार्दमापत्स्वपि न मुञ्चति ॥२०९॥
न मातरि न दारेषु न सोदर्ये न चात्मजे।
विश्वासस्तादृशः पुंसां यादृङ्मित्रे स्वभावजे ॥२१०॥
स्वकर्मसंतानविचेष्टितानि
कालान्तरावर्तिशुभाशुभानि।
इहैव दृष्टानि मयैव तानि
जन्मान्तराणीव दशान्तराणि ॥२११॥
कायः संनिहितापायः संपदः पदमापदाम्।
समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥२१२॥

शोकारातिभयत्राणं प्रीतिविश्रम्भभाजनम्।
केन रत्नमिदं सृष्टं मित्रमित्यक्षरद्वयम्॥२१३॥
मित्रं प्रीतिरसायनं नयनोरानन्दनं चेतसः
पात्रं यत्सुखदुःखयोः सह भवेन्मित्रेण तद्दुर्लभम्।
ये चान्ये सुहृदः समृद्धिसमये द्रव्याभिलाषाकुला-
स्ते सर्वत्र मिलन्ति तत्त्वनिकषग्रावा तु तेषां विपत्॥२१४॥
यो ध्रुवाणि परित्यज्य अध्रुवाणि निषेवते।
ध्रुवाणि तस्य नश्यन्ति अध्रुवं नष्टमेव हि॥२१५॥
मित्रं प्राप्नुत सज्जना जनपदैर्लक्ष्मीः समालम्ब्यतां
भूपालाः परिपालयन्तु वसुधां शश्वत्स्वधर्मे स्थिताः।
आस्तां मानसतुष्टये सुकृतिनां नीतिर्नवोढेव वः
कल्याणं कुरुता जनस्य भगवांश्चन्द्रार्धचूडामणिः॥२१६॥
इतिश्री हितोपदेशे मित्रलाभो नाम प्रथम कथासंग्रहः समाप्तः॥१॥

## सुहृद्भेदः

वर्धमानो महास्नेहो मृगेन्द्रवृषयोर्वने।
पिशुनेनातिलुब्धेन जम्बुकेन विनाशितः॥१॥
अधोऽधः पश्यतः कस्य महिमा नोपचीयते।
उपर्युपरि पश्यन्तः सर्व एव दरिद्रति॥२॥
ब्रह्महापि नरः पूज्यो यस्यास्ति विपुलं धनम्।
शशिनस्तुल्यवंशोऽपि निर्धनः परिभूयते॥३॥

अव्यवसायिनमलसं दैवपरं साहसाच्च परिहीनम्।
प्रमदेव हि वृद्धपतिं नेच्छत्युपगूहितुं लक्ष्मीः ॥४॥
आलस्यं स्त्रीसेवा सरोगता जन्मभूमिवात्सल्यम्।
संतोषो भीरुत्वं षड् व्याघाता महत्त्वस्य ॥५॥
संपदा सुस्थितं मन्यो भवति स्वल्पयापि यः।
कृतकृत्यो विधिर्मन्ये न वर्धयति तस्य ताम्॥६॥
निरुत्साहं निरानन्दं निर्वीर्यमरिनन्दनम्।
मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम्॥७॥
अलब्धं चैव लिप्सेत लब्धं रक्षेदवक्षयात्।
रक्षितं वर्धयेत् सम्यग्वृद्धं तीर्थेषु निक्षिपेत्॥८॥
धनेन किं यो न ददाति नाश्नुते
वलेन किं यश्च रिपून्न बाधते।
श्रुतेन किं यो न च धर्ममाचरेत्
किमात्मना यो न जितेन्द्रियो भवेत्॥९॥
जलबिन्दुनिपातेन क्रमशः पूर्यते घटः।
स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च॥१०॥
दानोपभोगरहिता दिवसा यस्य यान्ति वै।
स कर्मकारभस्त्रेव श्वसन्नपि न जीवति॥११॥
अञ्जनस्य क्षयं दृष्ट्वा वल्मीकस्य च संचयम्।
अवन्ध्यं दिवसं कुर्याद्दानाध्ययनकर्मसु॥१२॥
कोऽतिभारः समर्थानां किं दूरं व्यवसायिनाम्।
को विदेशः सविद्यानां कः परः प्रियवादिनाम्॥१३॥

करोतु नाम नीतिज्ञो व्यवसायमितस्ततः ।
फलं पुनस्तदेवास्य यद्विधेर्मनसि स्थितम् ॥ १४ ॥
विस्मयः सर्वथा हेयः प्रत्यूहः सर्वकर्मणाम् ।
तस्माद्विस्मयमुत्सृज्य साध्ये सिद्धिर्विधीयताम् ॥ १५ ॥
निमग्नस्य पयोराशौ पर्वतात्पतितस्य च ।
तक्षकेणापि दष्टस्य आयुर्मर्माणि रक्षति ॥ १६ ॥
नाकाले म्रियते जन्तुर्विद्धः शरशतैरपि ।
कुशाग्रेणैव संस्पृष्टः प्राप्तकालो न जीवति ॥ १७ ॥
अरक्षितं तिष्ठति दैवरक्षितं
सुरक्षितं दैवहतं विनश्यति ।
जीवत्यनाथोऽपि वने विसर्जितः
कृतप्रयत्नोऽपि गृहे न जीवति ॥ १८ ॥
नभिषेको न संस्कारः सिंहस्य क्रियते मृगैः ।
विक्रमार्जितराज्यस्य स्वयमेव मृगेन्द्रता ॥ १९ ॥
सेवया धनमिच्छद्भिः सेवकैः पश्य यत्कृतम् ।
स्वातन्त्र्यं यच्छरीरस्य मूढैस्तदपि हारितम् ॥ २० ॥
शीतवातातपक्लेशान्सहन्ते यान्पराश्रिताः ।
तदंशेनापि मेधावी तपस्तप्त्वा सुखी भवेत् ॥ २१ ॥
एतावज्जन्मसाफल्यं यदनायत्तवृत्तिता ।
ये पराधीनतां यातास्ते वै जीवन्ति के मृताः ॥ २२ ॥
एहि गच्छ पतोत्तिष्ठ वद मौनं समाचर ।
एवमाशाग्रहस्तैः क्रीडन्ति धनिनोऽर्थिभिः ॥ २३ ॥

अबुधैरर्थलाभाय पण्यस्त्रीभिरिव स्वयम्।
आत्मा संस्कृत्य संस्कृत्य परोपकरणीकृतः ॥२४॥
या प्रकृत्यैव चपला निपतत्यशुचावपि।
स्वामिनो बहु मन्यन्ते दृष्टिं तामपि सेवकाः ॥२५॥
मौनान्मूर्खः प्रवचनपटुर्वातुलो जल्पको वा
क्षान्त्या भीरुर्यदि न सहते प्रायशो नाभिजातः।
धृष्टः पार्श्वे वसति नियतं दूरतश्चाप्रगल्भः
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥२६॥
प्रणमत्युन्नतिहेतोर्जीवितहेतोर्विमुञ्चति प्राणान्।
दुःखीयति सुखहेतोः को मूढः सेवकादन्यः ॥२७॥
कथं नाम न सेव्यन्ते यत्नतः परमेश्वराः।
अचिरेणैव ये तुष्टाः पूरयन्ति मनोरथान् ॥२८॥
कुतः सेवाविहीनानां  चामरोद्धूतसंपदः।
उद्दण्डधवलच्छत्रं वाजिवारणवाहिनी ॥२९॥
अव्यापारेषु व्यापारं यो नरः कर्तुमिच्छति।
स भूमौ निहतः शेते कीलोत्पाटीव वानरः ॥३०॥
पराधिकारचर्चां यः कुर्यात् स्वामिहितेच्छया।
स विषीदति चीत्काराद्गर्दभस्ताडितो यथा ॥३१॥
याचते कार्यकाले यः किंभृत्यः स किंसुहृत्।
भृत्यान्संभाषयेद्यस्तु कार्यकाले स किंप्रभुः ॥३२॥
आश्रितानां भृतौ स्वमिसेवायां धर्मसेवने।
पुत्रस्योत्पादने चैव न सन्ति प्रतिहस्तकाः ॥३३॥

पृष्ठतः सेवयेदर्कं जठरेण हुताशनम्।
स्वामिनं सर्वभावेन परलोकममायया॥३४॥

सुहृदामुपकारकारणाद्-
द्विषतामप्यकारकारणात्।
नृपसंश्रय इष्यते बुधै-
र्जठरं को न बिभर्ति केवलम्॥३५॥

जीविते यस्य जीवन्ति विप्रा मित्राणि बान्धवाः।
सफलं जीवितं तस्य आत्मार्थे को न जीवति॥३६॥

यस्मिञ्जीवति जीवन्ति बहवः स तु जीवतु।
काकोऽपि किं न कुरुते चञ्च्वा स्वोदरपूरणम्॥३७॥

पञ्चभिर्याति दासत्वं पुराणैः कोऽपि मानवः।
कोऽपि लक्षैः कृती कोऽपि लक्षैरपि न लभ्यते॥३८॥

मनुष्यजातौ तुल्यायां भृत्यत्वमतिगर्हितम्।
प्रथमो यो न तत्रापि स किं जीवत्सु गण्यते॥३९॥

वाजिवारणलोहानां काष्ठपाषाणवाससाम्।
नारीपुरुषतोयानामन्तरं महदन्तरम्॥४०॥

स्वल्पस्नायुवसावशेषमलिनं निर्मांसमप्यस्थिकं
श्वा लब्ध्वा पारतोषमेति न भवेत्तस्य क्षुधः शान्तये।
सिंहो जम्बुकमङ्कानां तमपि त्यक्त्वा निहन्ति द्विपं
सर्वः कृच्छ्रगतोऽपि वाञ्छति जनः सत्त्वानुरूपं फलम्॥४१॥

लाङ्गूलचालनमधश्चरणावपातं
भूमौ निपत्य वदनोदरदर्शनं च।

श्वा पिण्डदस्य कुरुते गजपुंगवस्तु
धीरं विलोकयति चाटुशतैश्च भुङ्क्ते ॥४२ ॥
यज्जीव्यते क्षणमपि प्रथितं मनुष्यै-
र्विज्ञानविक्रमयशोभिरभज्यमानम् ।
तन्नाम जीवितमिह प्रवदन्ति तज्ज्ञाः
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥४३ ॥
यो नात्मजे न च गुरौ न च भृत्यवर्गे
दीने दयां न कुरुते न च वन्धुवर्गे ।
किं तस्य जीवितफलेन मनुष्यलोके
काकोऽपि जीवति चिराय बलिं च भुङ्क्ते ॥४४ ॥
अहितहितविचारशून्यबुद्धेः
श्रुतिसमयैर्बहुभिस्तिरस्कृतस्य ।
उदरभरणमात्रकेवलेच्छोः
पुरुषपशोश्च पशोश्च को विशेषः ॥४५ ॥
न कस्यचित्कश्चिदिह स्वभावा-
द्भवत्युदारोऽभिमतः खलो वा ।
लोके गुरुत्वं विपरीततां वा
स्वचेष्टितान्येव नरं नयन्ति ॥४६ ॥
आरोप्यते शिलो शैले यत्नेन महता यथा ।
निपात्यते क्षणेनाधस्तथात्मा गुणदोषयोः ॥४७ ॥
यात्यधोऽधो व्रजत्युच्चैर्नरः स्वैरेव कर्मभिः ।
कूपस्य खनिता यद्वत्प्राकारस्येव कारकः ॥४८ ॥

उदीरितोऽर्थः पशुनापि गृह्यते
हयाश्च नागाश्च वहन्ति देशिताः।
अनुक्तमप्यूहति पण्डितो जनः
परेङ्गितज्ञानफला हि बुद्धयः ॥४९ ॥
आकारैरिङ्गितैर्गत्या चेष्टया भाषणेन च।
नेत्रवक्त्रविकारेण लक्ष्यतेऽन्तर्गतं मनः ॥५० ॥
प्रस्तावसदृशं वाक्यं सद्भावसदृशं प्रियम्।
आत्मशक्तिसमं कोपं यो जानाति स पण्डितः ॥५१ ॥
अनाहूतो विशेद्यस्तु अपृष्टो बहु भाषते।
आत्मानं मन्यते प्रीतं भूपालस्य स दुर्मतिः ॥५२ ॥
किमप्यस्ति स्वभावेन सुन्दरं वाप्यसुन्दरम्।
यदेव रोचते यस्मै भवेत्तत्तस्य सुन्दरम् ॥५३ ॥
यस्य यस्य हि यो भावस्तेन तेन हि तं नरम्।
अनुप्रविश्य मेधावी क्षिप्रमात्मवशं नयेत् ॥५४ ॥
कोऽत्रेत्यहमिति ब्रूयात्सम्यगादेशयेति च।
आज्ञामवितथां कुर्याद्यथाशक्ति महीपतेः ॥५५ ॥
अल्पेच्छुर्धृतिमान् प्राज्ञश्छायेवानुगतः सदा।
आदिष्टो न विकल्पेत स राजवसतौ वसेत् ॥५६ ॥
दोषभीतेरनारम्भस्तत्कापुरुषलक्षणम्।
कैरजीर्णभयाद्भ्रातर्भोजनं परिहीयते ॥५७ ॥
आसन्नमेव नृपतिर्भजते मनुष्यं
विद्याविहीनमकुलीनमसंगतं वा।

प्रायेण भूमिपतयः प्रमदा लताश्च
यः पार्श्वतो वसति तं परिवेष्टयन्ति ॥५८ ॥
दूरादवेक्षणं हासः संप्रश्नेष्वादरो भृशम् ।
परोक्षेऽपि गुणश्लाघा स्मरणं प्रियवस्तुषु ॥५९ ॥
असेवके चानुरक्तिर्दानं सप्रियभाषणम् ।
अनुरक्तस्य चिह्नानि दोषेऽपि गुणसंग्रहः ॥६० ॥
कालयापनमाशानां वर्धनं फलखण्डनम् ।
विरक्तेश्वरचिह्नानि जानीयान्मतिमान्नरः ॥६१ ॥
अपायसंदर्शनजां विपत्ति-
मुपायसंदर्शनजां च सिद्धिम् ।
मेधाविनो नीतिविधिप्रयुक्तां
पुरः स्फुरन्तीमिव दर्शयन्ति ॥६२ ॥
अप्राप्तकालवचनं बृहस्पतिरपि ब्रुवन् ।
प्राप्नुयाद्बुद्ध्यवज्ञानमपमानं च शाश्वतम् ॥६३ ॥
आपद्युन्मार्गगमने कार्यकालात्ययेषु च ।
अपृष्टेनापि वक्तव्यं भृत्येन हितमिच्छता ॥६४ ॥
कल्पयति येन वृत्तिं येन च लोके प्रशस्यते सद्भिः ।
स गुणस्तेन च गुणिना रक्ष्य संवर्धनीयश्च ॥६५ ॥
दन्तस्य निर्घर्षणकेन राजन्
कर्णस्य कण्डूयनकेन वापि ।
तृणेन कार्यं भवतीश्वराणां
किमङ्गवाक्पाणिमता नरेण ॥६६ ॥

कदर्थितस्यापि च धैर्यवृत्त-
र्वुद्धेर्विनाशो न शङ्कनीयः।
अधःकृतस्यापि तनूनपातो
नाधः शिखा याति कदाचिदेव॥६७॥
मणिर्लुठति पादेषु काचः शिरसि धार्यते।
यथैवास्ते तथैवास्तां काचः काचो मणिर्मणिः॥६८॥
निर्विशेषो यदा राजा संमं सर्वेषु वर्तते।
तदोद्यमसमर्थानामुत्साहः परिहीयते॥६९॥
त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः।
नियोजयेत्तथैवैतां स्त्रिविधेष्वेव कर्मसु॥७०॥
स्थान एव नियोज्यन्ते भृत्याश्चाभरणानि च।
न हि चुडामणिः पादे नूपुरं शिरसा कृतम्॥७१॥
कनकभूषणसंग्रहणोचितो
यदि मणिस्त्रपुणि प्रणिधीयते।
न च विरौति न चापि स शोभते
भवति योजयितुर्वचनीयत॥७२॥
मुकुटे रोपितः काचश्चरणाभरणे मणिः।
न हि दोषो मणेरस्ति किंतु साधोरविज्ञता॥७३॥
बुद्धिमाननुरक्तोऽयमयं शूर इतो भयम्।
इति भृत्यविचारज्ञो भृत्यैरापूर्यते नृपः॥७४॥
अश्वः शस्त्रं शास्त्रं वीणा नरश्च नारी च।
पुरुषविशेषं प्राप्य हि भवन्ति योग्या अयोग्याश्च॥७५॥

किं भक्तेनासमर्थेन किं शक्तेनापकारिणा।
भक्तं शक्तं च मां राजन्नावज्ञातुं त्वमर्हसि ॥७६ ॥
अवज्ञानाद्राज्ञो भवति मतिहीनः परिजन-
स्ततस्तत्प्रामाण्याद्भवति न समीपे बुधजनः।
बुधैस्त्यक्ते राज्ये न हि भवति नीतिर्गुणवती
विपन्नायां नीतौ सकलमवशं सीदति जगत् ॥७७ ॥
जनं जनपदा नित्यमर्चयन्ति नृपार्चितम्।
नृपेणावमतो यस्तु स सर्वैरवमन्यते ॥७८ ॥
बालादपि ग्रहीतव्यं युक्तमुक्तं मनीषिभिः।
रवेरविषये किं न प्रदीपस्य प्रकाशनम् ॥७९ ॥
बंधुस्त्रीभृत्यवर्गस्य बुद्धेः सत्त्वस्य चात्मनः।
आपन्निकषपाषाणे नरो जानाति सारताम् ॥८० ॥
यस्य प्रसादे पद्मास्ते विजयश्च पराक्रमे।
मृत्युश्च वसति क्रोधे सर्वतेजोमयो हि सः ॥८१ ॥
बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः।
महती देवता ह्येषा नररूपेण तिष्ठति ॥८२ ॥
निरपेक्षो न कर्तव्यो भृत्यैः स्वामी कदाचन।
निरपेक्षं प्रभुं कृत्वा भृत्यः स्याद्दधिकर्णवत् ॥८३ ॥
क्षुद्रशत्रुर्भवेद्यस्तु विक्रमान्नैव लभ्यते।
तमाहन्तुं पुरस्कार्यः सदृशस्तस्य सैनिकः ॥८४ ॥
आज्ञाभङ्गो नरेन्द्राणां ब्राह्मणानामनादरः।
पृथक्शय्या च नारीणामशस्त्रविहितो वधः ॥८५ ॥

मतिरेव बलाद्गरीयसी
यदभावे करिणामियं दशा।
इति घोषयतीव डिण्डिमः
करिणो हस्तिपकाहतः क्वणन्॥८६॥
प्रतिवाचमदत्त केशवः
शपमानाय च चेदिभूभुजे।
अनुहुंकुरुते घनध्वनिं
न हि गोमायुरुतानि केसरी॥८७॥
तृणानि नोन्मूलयति प्रभञ्जनो
मृदूनि नीचैः प्रणातानि सर्वतः।
समुच्छ्रितानेव तरून्प्रबाधते
महान् महत्येव करोति विक्रमम्॥८८॥
शब्दामात्रान्न भेतव्यमज्ञात्वा शब्दकारणम्।
शब्दहेतुं परिज्ञाय कुट्टनी गौरवं गता॥८९॥
नानिवेद्य प्रकुर्वीत भर्तुः किंचिदपि स्वयम्।
कार्यमापत्प्रतीकारादन्यत्र जगतीपते॥९०॥
कमण्डलूपमोऽमात्यस्तनुत्यागो बहुग्रहः।
नृपते किंक्षणो मूर्खो दरिद्रः किंवराटकः॥९१॥
स ह्यमात्यः सदा श्रेयान् काकिनीं यः प्रवर्धयेत्।
कोशः कोशवतः प्राणाः प्राणाः प्राणा न भूपतेः॥९२॥
किं चान्यैर्न कुलाचारैः सेव्यतामेति पूरुषः।
धनहीनः स्वपत्न्यापि त्यजते किं पुनः परैः॥९३॥

अतिव्ययोऽनपेक्षा च तथाऽर्जनमधर्मतः।
कोषणं दूरसंस्थानं कोशव्यसनमुच्यते॥९४॥
क्षिप्रमायमनालोच्य व्ययमानः स्ववाञ्छया।
परिक्षीयत एवासौ धनी वैश्रवणोपमः॥९५॥
ब्राह्मणः क्षत्रियो बन्धुर्नाधिकारे प्रशस्यते।
ब्राह्मणः सिद्धमप्यर्थं कृच्छ्रेणापि न यच्छति॥९६॥
नियुक्तः क्षत्रियो द्रव्ये खड्गं दर्शयते ध्रुवम्।
सर्वस्वं ग्रसते बन्धुराक्रम्य ज्ञातिभावतः॥९७॥
अपराधेऽपि निःशङ्को नियोगी चिरसेवकः।
स स्वामिनमवज्ञाय चरेच्च निरवग्रहः॥९८॥
उपकर्ताऽधिकारस्थः स्वापराधं न मन्यते।
उपकारं ध्वजीकृत्य सर्वमेवावलुम्पति॥९९॥
उपांशुक्रीडितोऽमात्यः स्वयं राजायते यतः।
अवज्ञा क्रियते तेन सदा परिचयाद् ध्रुवम्॥१००॥
अन्तर्दुष्टः क्षमायुक्तः सर्वानर्थकरः किल।
शकुनिः शकटारश्च दृष्टान्तावत्र भूपते॥१०१॥
सदामात्यो न साध्यः स्यात्समृद्धः सर्व एव हि।
सिद्धानामयमादेश ऋद्धिश्चित्तविकारिणी॥१०२॥
प्राप्तार्थग्रहणं द्रव्यपरीवर्तोऽनुरोधनम्।
उपेक्षा बुद्धिहीनत्वं भोगोऽमात्यस्य दूषणम्॥१०३॥
नियोग्यर्थग्रहापायो राज्ञां नित्यपरीक्षणम्।
प्रतिपत्तिप्रदानं च तथा कर्मविपर्ययः॥१०४॥

निपीडिता वमन्त्युच्चैरन्तःसारं महीपतेः।
दुष्टव्रणा इव प्रायो भवन्ति हि नियोगिनः ॥१०५॥
मुहुर्नियोगिनो बाध्या वसुधारा महीपते।
सकृत्किं पीडितं स्नानवस्त्रं मुञ्चेद्द्रुतं पयः ॥१०६॥
आज्ञाभङ्गकरान् राजा न क्षमेत् स्वसुतानपि।
विशेषः को नु राज्ञश्च राज्ञश्चित्रगतस्य च ॥१०७॥
स्तब्धस्य नश्यति यशो विषमस्य मैत्री
नष्टेन्द्रियस्य कुलमर्थपरस्य धर्मः।
विद्याफलं व्यसनिनः कृपणस्य सौख्यं
राज्यं प्रमत्तसचिवस्य नराधिपस्य ॥१०८॥
तस्करेभ्यो नियुक्तेभ्यः शत्रुभ्यो नृपवल्लभात्।
नृपतिर्निजलोभाच्च प्रजा रक्षेत्पितेव हि ॥१०९॥
स्वर्णरेखामहं स्पृष्ट्वा बद्ध्वात्मानं च दूतिका।
आदित्सुश्च मणिं साधुः स्वदोषाद्दुःखिता इमे ॥११०॥
रजनीचरनाथेन खण्डिते तिमिरे निशि।
यूनां मनांसि विव्याध दृष्ट्वा दृष्ट्वा मनोभवः ॥१११॥
आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च संध्ये
धर्मश्च जानाति नरस्सय वृत्तम् ॥११२॥
अतथ्यान्यपि तथ्यानि दर्शयन्त्यतिपेशलाः।
समे निम्नोन्नतानीव चित्रकर्मविदो जनाः ॥११३॥

उत्पन्नेष्वपि कार्येषु मतिर्यस्य न हीयते।
स निस्तरति दुर्गाणि गोपी जार द्वयं यथा॥११४॥
नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः।
नान्तकः सर्वभूतानां न पुंसां वामलोचना॥११५॥
न दानेन न मानेन नार्जवेन न सेवया।
न शस्त्रेण न शास्त्रेण सर्वथा विषमाः स्त्रियः॥११६॥
गुणाश्रयं कीर्तियुतं च कान्तं
पतिं रतिज्ञं सधनं युवानम्।
विहाय शीघ्रं वनिता व्रजन्ति
नरान्तरं शीलगुणादिहीनम्॥११७॥
न तादृशीं प्रीतिमुपैति नारी
विचित्रशय्यां शयितापि कामम्।
यथा हि दूर्वादिविकीर्णभूमौ
प्रयाति सौख्यं परकान्तसङ्गात्॥११८॥
आहारो द्विगुणः स्त्रीणां बुद्धिस्तासां चतुर्गुणा।
षड्गुणो व्यवसायश्च कामश्चाष्टगुणः स्मृतः॥११९॥
उपायेन हि यच्छक्यं न तच्छक्यं पराक्रमैः।
काक्या कनकसूत्रेण कृष्णसर्पो निपातितः॥१२०॥
दुष्टा भार्या शठं मित्रं भृत्यश्चोत्तरदायकः।
ससर्पे च गृहे वासो मृत्युरेव न संशयः॥१२१॥
बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम्।
पश्य सिंहो मदोन्मत्तः शशकेन निपातितः॥१२२॥

त्रासहेतोर्विनीतिस्तु क्रियते जीविताशया।
पञ्चत्वं चेद्गमिष्यामि किं सिंहानुनयेन मे॥१२३॥
आपद्युन्मार्गगमने कार्यकालत्ययेषु च।
कल्याणवचनं ब्रूयादपृष्टोऽपि हितो नरः॥१२४॥
भोगस्य भाजनं राजा न राजा कार्यभाजनम्।
राजकार्यपरिध्वंसी मन्त्री दोषेण लिप्यते॥१२५॥
वरं प्राणपरित्यागः शिरसो वापि कर्तनम्।
न तु स्वामिपदावाप्तिपातकेच्छोरुपेक्षणम्॥१२६॥
अत्युच्छ्रिते मन्त्रिणि पार्थिवे च
विष्टभ्य पादावुपतिष्ठते श्रीः।
सा स्त्रीस्वभावादसहा भरस्य
तयोर्द्वयोरेकतरं जहाति॥१२७॥
एकं भूमिपतिः करोति सचिवं राज्ये प्रमाणं यदा
तं मोहाच्छ्रयते मदः स च मदालस्येन निर्भिद्यते।
निर्भिन्नस्य पदं करोति हृदये तस्य स्वतन्त्रस्पृहा
स्वातन्त्र्यस्पृहया ततः स नृपतेः प्राणान्तिकं द्रुह्यति॥१२८॥
विषदिग्धस्य भक्तस्य दन्तस्य चलितस्य च।
अमात्यस्य च दुष्टस्य मूलादुद्धरणं सुखम्॥१२९॥
यः कुर्यात्सचिवायत्तां श्रियं तद्व्यसने सति।
सोऽन्धवज्जगतीपालः सीदेत् संचारकैर्विना॥१३०॥
न सोऽस्ति पुरुषो लोके यो न कामयते श्रियम्।
परस्य युवतीं रम्यां सादरं नेक्षतेऽत्र कः॥१३१॥

कुर्वन्नपि व्यलीकानि यः प्रियः प्रिय एव सः।
अशेषदोषदुष्टोऽपि कायः कस्य न वल्लभः ॥१३२॥
अप्रियाण्यपि कुर्वाणो यः प्रियः प्रिय एव सः।
दग्धमन्दिरसारेऽपि कस्य वह्नावनादरः ॥१३३॥
यस्मिन्नेवाधिकं चक्षुरारोहयति पार्थिवः।
सुतेऽमात्येऽप्युदासीने स लक्ष्म्याश्रीयते जनः ॥१३४॥
अप्रियस्यापि पथ्यस्य परिणामः सुखावहः।
वक्ता श्रोता च यत्रास्ति रमन्ते तत्र संपदः ॥१३५॥
मूलभृत्यान्परित्यज्य नागन्तून्प्रति मानयेत्।
नातः परतरो दोषो राज्यभेदकरो यतः ॥१३६॥
दुर्जनो नार्जवं याति सेव्यमानोऽपि नित्यशः।
स्वेदनाभ्यञ्जनोपायैः स्वपुच्छमिव नामितम् ॥१३७॥
स्वेदितो मर्दितश्चैव रज्जुभिः परिवेष्टितः।
मुक्तो द्वादशभिर्वर्षैः श्वपुच्छः प्रकृतिं गतः ॥१३८॥
वर्धनं वाथ सन्मानं खलानां प्रीतये कुतः।
फलन्त्यमृतसेकेऽपि न पथ्यानि विषद्रुमाः ॥१३९॥
अपृष्टोऽपि हितं ब्रूयाद्यस्य नेच्छेत्पराभवम्।
एष एव सतां धर्मो विपरीतमतोऽन्यथा ॥१४०॥
स स्निग्धोऽकुशलान्निवारयति यस्तत्कर्म यन्निर्मलं
सा स्त्री याऽनुविधायिनी स मतिमान् यः सद्भिरभ्यर्च्यते।
सा श्रीर्या न मदं करोति स सुखी यस्तृष्णया मुच्यते
तन्मित्रं यदकृत्रिमं स पुरुषो यः स्विद्यते नेन्द्रियैः ॥१४१॥

नृपः कामासक्तो गणयति न कार्यं न च हितं
यथेष्टं स्वच्छन्दः प्रविचरति मत्तो गज इव।
ततो मानध्मातः स पतति यदा शोकगहने
तदा भृत्ये दोषान्क्षिपति न निजं वेत्त्यविनयम्॥१४२॥
न परस्यापराधेन परेषां दण्डमाचरेत्।
आत्मावगतं कृत्वा बध्नीयात्पूजयेच्च वा॥१४३॥
गुणदोषावनिश्चित्य विधिर्न ग्रहनिग्रहे।
स्वनाशाय यथा न्यस्तो दर्पात्सर्पमुखे करः॥१४४॥
मन्त्रबीजमिदं गुप्तं रक्षणीयं यथा तथा।
मनागपि न भिद्येत तद्भिन्नं न प्ररोहति॥१४५॥
आदेयस्य प्रदेयस्य कर्तव्यस्य च कर्मणः।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम्॥१४६॥
मन्त्रो योध इवाधीरः सर्वाङ्गैः संवृतैरपि।
चिरं न सहते स्थातु परेभ्यो भेदशङ्कया॥१४७॥
सकृद्दुष्टं तु यो मित्रं पुनः संधातुमिच्छति।
स मृत्युमेव गृह्णाति गर्भमश्वतरी यथा॥१४८॥
अङ्गाङ्गिभावमज्ञात्वा कथं सामर्थ्यनिर्णयः।
पश्य टिट्टिभमोण समुद्रो व्याकुलीकृतः॥१४९॥
पराभवं परिच्छेत्तुं योग्यायोग्यं च वेत्ति यः।
अस्तीह यस्य विज्ञानं कृच्छ्रेणापि न सीदति॥१५०॥
अनुचितकार्यारम्भः स्वजनविरोधो बलीयसि स्पर्धा।
प्रमदाजनविश्वासो मृत्योर्द्वाराणि चत्वारि॥१५१॥

संपत्तयः पराधीनाः सदा चित्तमनिर्वृतम्।
स्वजीवितेऽप्यविश्वासस्तेषां ये राजसेवकाः ॥१५२॥
कोऽर्थान्प्राप्य न गर्वितो विषयिणः कस्यापदोऽस्तं गताः,
स्त्रीभिः कस्य न खण्डितं भुवि मनः को वाऽस्ति राज्ञां प्रियः।
कः कालस्य भुजान्तरं न च गतः कोऽर्थी गतो गौरवं
को वा दुर्जनवागुरासु पतितः क्षेमेण यातः पुमान्॥१५३॥
मज्जन्नपि पयोराशौ लब्ध्वा सर्पावलम्बनम्।
न मुञ्चति न चादत्ते तथा मुग्धोऽस्मि संप्रति॥१५४॥
एकत्र राजविश्वासो नश्यत्यन्यत्र बान्धवः।
किं करोमि क्व गच्छामि पतितो दुःखसागरे॥१५५॥
दुर्जनगम्या नार्यः प्रायेणापात्रभृद्भवति राजा।
कृपणानुसारि च धनं देवो गिरिजलधिवर्षी चव॥१५६॥
कश्चिदाश्रयसौन्दर्याद्धत्ते शोभामसज्जनः।
प्रमदालोचनन्यस्तं मलीमसमिवाञ्जनम्॥१५७॥
आराध्यमानो नृपतिः प्रयत्ना-
न्न तोषमायाति किमत्र चित्रम्।
अयं त्वपूर्वप्रतिमाविशेषो
यः सेव्यमानो रिपुतामुपैति॥१५८॥
निमित्तमुद्दिश्य हि यः प्रकुप्यति
ध्रुवं स तस्यापगमे प्रसीदति।
अकारणद्वेषि मनस्तु यस्य वै

कथं जनस्तं परितोषयिष्यति ॥१५९॥
विज्ञैः स्निग्धैरुपकृतमपि द्वेष्यतामेति कश्चित्
साक्षादन्यैरपकृतमपि प्रीतिमेवोपयाति ।
चित्रं चित्रं किमथ चरितं नैकभावाश्रयाणां
सेवाधर्मः परमगहनो योगिनामप्यगम्यः ॥१६०॥
कृतशतमसत्सु नष्टं सुभाषितशतं च नष्टमबुधेषु ।
वचनशतमवचनकरे बुद्धिशतमचेतने नष्टम् ॥१६१॥
चन्दनतरुषु भुजंगा जलेषु कमलानि तत्र च ग्राहाः ।
गुणघातिनश्च भोगे खला न च सुखान्यविघ्नानि ॥१६२॥
मूलं भुजंगैः कुसुमानि भृङ्गैः
शाखाः प्लवङ्गैः शिखराणि भल्लैः ।
नास्त्येव तच्चन्दनपादपस्य
यन्नाश्रितं दुष्टतरैश्च हिंस्रैः ॥१६३॥
दूरादुच्छ्रितपाणिरार्द्रनयनः प्रोत्सारितार्धासनो
गाढालिङ्गनतत्परः प्रियकथापश्नेषु दत्तादरः ।
अन्तर्भूतविषो बहिर्मधुमयश्चातीव मायापटुः
को नामायमपूर्वनाटकविधिर्यः शिक्षितो दुर्जनैः ॥१६४॥
पोतो दुस्तर वारिराशितरणे दीपोऽन्धकरागमे
निर्वाते व्यजनं मदान्धकरिणां दर्पोपशान्त्यै सृणिः ।
इत्थं तद्भुवि नास्ति यस्य विधिना नोपायचिन्ता कृता
मन्ये दुर्जनचित्तवृत्तिहरणे धातापि भग्नोद्यमः ॥१६५॥
ययोरेव समं वित्तं ययोरेव समं बलम् ।

तयोर्विवादो मन्तव्यो नोत्तमाधमयोः क्वचित् ॥ १६६ ॥
मन्त्रिणा पृथिवीपालचित्तं विघटितं क्वचित् ।
वलयं स्फटिकस्येव को हि संधातुमीश्वरः ॥ १६७ ॥
वज्रं च राजतेजश्च द्वयमेवातिभीषणम् ।
एकमेकत्र पतति पतत्यन्त् समन्ततः ॥ १६८ ॥
मृतः प्राप्नोति वा स्वर्गं शत्रुं हत्वा सुखानि वा ।
उभावपि हि शुराणां गुणावेतौ सुदुर्लभौ ॥ १६९ ॥
यत्रायुद्धे ध्रुवं मृत्युर्युद्धे जीवितसंशयः ।
तमेव कालं युद्धस्य प्रवदन्ति मनीषिणः ॥ १७० ॥
अयुद्धे हि यदा पश्येन्न किंचिद्धितमात्मनः ।
युध्यमानस्तदाप्राज्ञो म्रियते रिपुणा सह ॥ १७१ ॥
जये च लभते लक्ष्मीं मृतेनापि सुराङ्गनाम् ।
क्षणविध्वंसिनः कायः का चिन्ता मरणे रणे ॥ १७२ ॥
बलवानपि निस्तेजाः कस्य नाभिभवास्पदम् ।
निःशङ्कं दीयते लोकैः पश्य भस्मचये पदम् ॥ १७३ ॥
बन्धुः को नाम दुष्टानां कुप्यते को न याचितः ।
को न दृष्यति वित्तेन कुकृत्ये को न पण्डितः ॥ १७४ ॥
दुर्वृत्तः क्रियते धूर्तैः श्रीमानात्मविवृद्धये ।
किं नाम खलसंसर्गः कुरुते नाश्रयाशवत् ॥ १७५ ॥
परैः संभुज्यते राज्यं स्वयं पापस्य भाजनम् ।
धर्मातिक्रमतो राजा सिंहो हस्तिवधादिव ॥ १७६ ॥
भूम्येकदेशस्य गुणान्वितस्य

भृत्यप्रणाशो मरणं नृपाणां
नष्टापि भूमिः सुलभा न भृत्याः ॥१७७॥
पिता वा यदि वा भ्राता पुत्रो वा यदि वा सुहृत्।
प्राणच्छेदकरा राज्ञा हन्तव्या भूतिमिच्छता ॥१७८॥
धर्मार्थकामतत्त्वज्ञो नैकान्तकरुणो भवेत्।
न हि हस्तस्थमप्यन्नं क्षमावान् भक्षितुं क्षमः ॥१७९॥
क्षमा शत्रौ च मित्रे च यतीनामेव भूषणम्।
अपराधिषु सत्त्वेषु नृपाणां सैव दूषणम् ॥१८०॥
राज्यलोभादहंकारादिच्छतः स्वामिनः पदम्।
प्रायश्चित्तं तु तस्यैकं जीवोत्सर्गो न चापरम् ॥१८१॥
राजा घृणी ब्राह्मणः सर्वभक्षः
स्त्री चावशा दुष्प्रकृतिः सहायः।
प्रेष्यः प्रतीपोऽधिकृतः प्रमादी
त्याज्या इमे यश्च कृतं न वेत्ति ॥१८२॥
सत्यानृता सपरुषा प्रियवादिनी च
हिंस्र दयालुरपि चार्थपरा वदान्या।
नित्यव्यया प्रचुररत्नधनागमा च
वराङ्गनेव नृपनीतिरनेकरूपा ॥१८३॥
सुहृद्भेदस्तावद्भवतु भवतां शत्रुनिलये
खलः कालाकृष्टः प्रलयमुपसर्पत्वहरहः।
जनो नित्यं भूयात् सकलसुखसंपत्तिवसतिः
कथारामे रम्ये सततमिह बालोऽपि रमताम् ॥१८४॥

इतिश्री हितोपदेशे सुहृभेदो नाम द्वितीयः संग्रहः समाप्तः।

विग्रहः

हंसैः सह मयूराणां विग्रहे तुल्यविक्रमे।
विश्वास्य वञ्चिता हंसाः काकैः स्थित्वाऽरिमन्दिरे॥१॥
यदि न स्यान्नरपतिः सम्यङ्नेता ततः प्रजा।
अकर्णधारा जलधौ विप्लवेतेह नौरिव॥२॥
प्रजां संरक्षति नृपः सा वर्धयति पार्थिवम्।
वर्धनाद्रक्षणं श्रेयस्तद्भावे सदप्यसत्॥३॥
पयःपानं भुजंगानां केवलं विषवर्धनम्।
उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये॥४॥
विद्वानेवोपदेष्टव्यो नाविद्वांस्तु कदाचन।
वारानुपदिश्याथ स्थानभ्रष्टा ययुः खगाः॥५॥
अस्माभिर्निर्मिता नीडाश्चञ्चुमात्राहृतैस्तृणैः।
हस्तपादादिसंयुक्ता यूयं किमिति सीदथ॥६॥
अन्यदा भूषणं पुंसां क्षमा लज्जेव योषिताम्।
पराक्रमः परिभवे वैयात्यं सुरतेष्विव॥७॥
आत्मनश्च परेषां च यः समीक्ष्य बलाबलम्।
अन्तरं नैव जानाति स तिरस्क्रियतेऽरिभिः॥८॥
सुचिरं हि चरन्नित्यं क्षेत्रे सस्यमबुद्धिमान्।
द्वीपचर्मपरिच्छन्नो वाग्दोषाद्गर्दभो हतः॥९॥
सेवितव्यो महावृक्षः फलच्छायासमन्वितः।
यदि दैवात्फलं नास्ति च्छाया केन निवार्यते॥१०॥

हीनसेवा न कर्तव्या कर्तव्यो महदाश्रयः।
पयोऽपि शौण्डिकीहस्ते वारुणीत्यभिधीयते ॥ ११ ॥
महानप्यल्पतां याति निर्गुणे गुणविस्तरः।
आधाराधेयभावेन गजेन्द्र इव दर्पणे ॥ १२ ॥
व्यपदेशेऽपि सिद्धिः स्यादतिशक्ते नराधिपे।
शशिनो व्यपदेशेन शशकाः सुखमासते ॥ १३ ॥
स्पृशन्नपि गजो हन्ति जिघ्रन्नपि भुजंगमः।
पालयन्नपि भूपालः प्रहसन्नपि दुर्जनः ॥ १४ ॥
उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा।
सदैवावध्यभावेन यथार्थस्य हि वाचकः ॥ १५ ॥
स्वदेशजं कुलाचारं विशुद्धमुपधाशुचिम्।
मन्त्रज्ञमव्यसनिनं व्यभिचारविवर्जितम् ॥ १६ ॥
अधीतव्यवहारार्थं मौलं ख्यातं विपश्चितम्।
अर्थस्योत्पादकं चैव विदध्यान्मन्त्रिणं नृपः ॥ १७ ॥
राजा मत्तः शिशुश्चैव प्रमादी धनगर्वितः।
अप्राप्यमपि वाञ्छन्ति किं पुनर्लभ्यतेऽपि यत् ॥ १८ ॥
भक्तो गुणी शुचिर्दक्षः प्रगल्भोऽव्यसनी क्षमी।
ब्राह्मणः परमर्मज्ञो दूतः स्यात्प्रतिभानवान् ॥ १९ ॥
प्रसादं कुरुते पत्युः संपत्तिं नाभिवाञ्छति।
कालिमा कालकूटस्य नापैतीश्वरसंगमात् ॥ २० ॥
खलः करोति दुर्वृत्तं नूनं फलति साधुषु।
दशाननोऽहरत्सीतां बन्धनं स्यान्महोदधेः ॥ २१ ॥

न स्थातव्यं न गन्तव्यं दुर्जनेन समं क्वचित्।
काकसङ्गाद्धतो हंसस्तिष्ठन् गच्छंश्च वर्तकः॥२२॥
दुर्जनैरुच्यमानानि संमतानि प्रियाण्यपि।
अकालकुसुमानीव भयं संजनयन्ति हि॥२३॥
प्रत्यक्षेऽपि कृते दोषे मूर्खः सान्त्वेन तुष्यति।
रथकारो निजां भार्यां सजारां शिरसाऽकरोत्॥२४॥
परुषाण्यपि या प्रोक्ता दृष्टा क्रोधचक्षुषा।
सुप्रसन्नमुखी भर्तुः सा नारी धर्मभागिनी॥२५॥
नगरस्थो वनस्थो वा पापो वा यदि वा शुचिः।
यासां स्त्रीणां प्रियो भर्ता तासां लोका महोदयाः॥२६॥
भर्ता हि परमं नार्या भूषणं भूषणैर्विना।
एषा विरहिता तेन शोभनापि न शोभना॥२७॥
तिस्रः कोट्योऽर्धकोटी च यानि लोमानि मानवे।
तावत्कालं वसेत्स्वर्गे भर्तारं याऽनुगच्छति॥२८॥
व्यालग्राही यथा व्यालं बलादुद्धरते बिलात्।
तद्वद्भर्तारमादाय स्वर्गलोके महीयते॥२९॥
चितौ परिष्वज्य विचेतनं पतिं
प्रिया हि या मुञ्चति देहमात्मनः।
कृत्वापि पापं शतसंख्यमप्यसौ
पतिं गृहीत्वा सुरलोकमाप्नुयात्॥३०॥
शतं दद्यान्न विवदेदिति विज्ञस्य संमतम्।
विना हेतुमपि द्वन्द्वमेतन्मूर्खस्य लक्षणम्॥३१॥

वर्णाकारप्रतिध्वानैर्नेत्रवक्त्रविकारतः।
अप्यूहन्ति मनो धीरास्तस्माद्रहसि मन्त्रयेत्॥ ३२ ॥
वैद्यानामातुरः श्रेयान् व्यसनी यो नियोगिनाम्।
विदुषां जीवनं मूर्खः सद्वर्णो जीवनं सताम्॥ ३३ ॥
भवेत्स्वपरराष्ट्राणां कार्याकार्यावलोकने।
चारचक्षुर्महीभर्तुर्यस्य नास्त्यन्ध एव सः॥ ३४ ॥
तीर्थाश्रमसुरस्थाने शास्त्रविज्ञानहेतुना।
तपस्विव्यञ्जनोपेतैः स्वचरैः सह संवदेत्॥ ३५ ॥
षट्कर्णो भिद्यते मन्त्रस्तथा प्राप्तश्च वार्तया।
इत्यात्मना द्वितीयेन मन्त्रः कार्यो महीभृता॥ ३६ ॥
मन्त्रभेदेऽपि ये दोषा भवन्ति पृथिवीपतेः।
न शक्यास्ते समाधातुमिति नीतिविदां मतम्॥ ३७ ॥
स किंभृत्यः स किंमन्त्री य आदावेव भूपतिम्।
युद्धोद्योगं स्वभूत्यागं निर्दिशत्यविचारितम्॥ ३८ ॥
विजेतु प्रयतेतारीन्न युद्धेन कदाचन।
अनित्यो विजयो यस्माद्दृश्यते युध्यमानयोः॥ ३९ ॥
साम्ना दानेन भेदेन समस्तैरथवा पृथक्।
साधितुं प्रयतेतारीन्न युद्धेन कदाचन॥ ४० ॥
सर्व एवं जनः शूरो ह्यनासादितविग्रहः।
अदृष्टपरसामर्थ्यः सदर्पः को भवेन्न हि॥ ४१ ॥
न तथेत्थाप्यते ग्रावा प्राणिभिर्दारुणा यथा।
अल्पोपायान्महासिद्धिरेतन्मन्त्रफलं महत्॥ ४२ ॥

यथा कालकृतोद्योगात्कृषिः फलवती भवेत्।
तद्वन्नीतिरयं देव चिरात्फलति रक्षणात्॥४३॥
महतो दूरभीरुत्वमासन्ने शूरता गुणः।
विपत्तौ च महाँल्लोके धीरतामनुगच्छति॥४४॥
प्रत्यूहः सर्वसिद्धीनामुत्तापः प्रथमः किल।
अतिशीतलमप्यम्भः किं भिनत्ति न भूभृतः॥४५॥
बलिना सह योद्धव्यमिति नास्ति निदर्शनम्।
तद्युद्धं हस्तिना सार्धं नराणां मृत्युमावहेत्॥४६॥
स मूर्खः कालमप्राप्य योऽपकर्तरि वर्तते।
कलिर्बलवता सार्धं कीटपक्षोद्यमो यथा॥४७॥
कौर्मं संकोचमास्थाय प्रहारमपि मर्षयेत्।
प्राप्तकाले तु नीतिज्ञ उत्तिष्ठेत्क्रुरसर्पवत्॥४८॥
महत्यल्पेऽप्युपायज्ञः सममेव भवेत्क्षमः।
समुन्मूलयितुं वृक्षांस्तृणानीव नदीरयः॥४९॥
एकः शतं योधयति प्राकारस्थो धनुर्धरः।
शतं शतसहस्राणि तस्माद्दुर्गं विशिष्यते॥५०॥
अदुर्गो विषयः कस्य नारेः परिभवास्पदम्।
अदुर्गोऽनाश्रयो राजा पोतच्युतमनुष्यवत्॥५१॥
दुर्गं कुर्यान्महाखातमुच्चप्राकारसंयुतम्।
सयन्त्रं सजलं शैलसरिन्मरुवनाश्रयम्॥५२॥
विस्तीर्णताऽतिवैषम्यं रसधान्येध्मसंग्रहः।
प्रवेशश्चापसारश्च सप्तैता दुर्गसंपदः॥५३॥

यो यत्र कुशलः कार्ये तं तत्र विनियोजयेत्।
कर्मस्वदृष्टकर्मा यः शास्त्रज्ञोऽपि विमुह्यति ॥५४॥
धान्यानां संग्रहो राजन्नुत्तमः सर्वसंग्रहात्।
निक्षिप्तं हि मुखे रत्नं न कुर्यात्प्राणधारणम् ॥५५॥
ख्यातः सर्वरसानां हि लवणो रस उत्तमः।
गृहीतं च विना तेन व्यञ्जनं गोमयायते ॥५६॥
आत्मपक्षं परित्यज्य परपक्षेषु यो रतः।
स परैर्हन्यते मूढो नीलवर्णशृगालवत् ॥५७॥
यः स्वभावो हि यस्यास्ति स नित्यं दुरतिक्रमः।
श्वा यदि क्रियते राजा स किं नाश्नात्युपानहम् ॥५८॥
छिद्रं मर्म च वीर्यं च सर्वं वेत्ति निजो रिपुः।
दहत्यन्तर्गतश्चैव शुष्कं वृक्षमिवानलः ॥५९॥
नन्दं जघान चाणक्यस्तीक्ष्णदूतप्रयोगतः।
तद्दूरान्तरितं दूतं पश्येद्धीरसमन्वितः ॥६०॥
न सा सभा यत्र न सन्ति वृद्धा
वृद्धा न ते ये न वदन्ति धर्मम्।
धर्मः स नो यत्र न सत्यमस्ति
सत्यं न तद्यच्छलमभ्युपैति ॥६१॥
दूतो म्लेच्छोऽप्यवध्यः स्याद्राजा दूतमुखो यतः।
उद्यतेष्वपि शस्त्रेषु दूतो वदति नान्यथा ॥६२॥
स्वापकर्षं परोत्कर्षं दूतोक्तैर्मन्यते तु कः।
सदैवावध्यभावेन दूतः सर्वं हि जल्पति ॥६३॥

असंतुष्टा द्विजा नष्टाः संतुष्टाश्च महीभुजः।
सलज्जा गणिका नष्टा निर्लज्जाश्च कुलस्त्रियः॥६४॥
मित्रामात्यसुहृद्वर्गा यदा स्युर्दृढभक्तयः।
शत्रूणां विपरीताश्च कर्तव्यो विग्रहस्तदा॥६५॥
भूमिर्मित्रं हिरण्यं च विग्रहस्य फलं त्रयम्।
यदैतन्निश्चितं भावि कर्तव्यो विग्रहस्तदा॥६६॥
विशन्ति सहसा मूढा येऽविचार्य द्विषद्बलम्।
खड्गधारापरिष्वङ्गं लभन्ते ते सुनिश्चितम्॥६७॥
किं मन्त्रेणाननुष्ठानाच्छास्त्रवित्पृथिवीपतेः।
न ह्यौषधपरिज्ञानाद्व्याधेः शान्ति क्वचिद्भवेत्॥६८॥
नद्यद्रिवनदुर्गेषु यत्र यत्र भयं नृप।
तत्र तत्र च सेनानीर्यायाद् व्यूही कृतैर्बलैः॥६९॥
बलाध्यक्षः पुरो यायात्प्रवीरपुरुषान्वितः।
मध्ये कलत्रं स्वामी च कोशः फल्गु च यद्बलम्॥७०॥
पार्श्वयोरुभयोरश्वा अश्वानां पार्श्वतो रथाः।
रथानां पार्श्वयोर्नागा नागानां च पदातयः॥७१॥
पश्चात्सेनापतिर्यायात्खिन्नानाश्वासयञ्छनैः।
मन्त्रिभिः सुभटैर्युक्तः प्रतिगृह्य बलं नृपः॥७२॥
समेयाद्विषमं नागैर्जलाढ्यं समहीधरम्।
सममश्वैर्जलं नौभिः सर्वत्रैव पदातिभिः॥७३॥
हस्तिनां गमनं प्रोक्तं प्रशस्तं जलदागमे।
तदन्यत्र तुरंगाणां पत्तीनां सर्वदैव हि॥७४॥

शैलेषु दुर्गमार्गेषु विधेयं नृप रक्षणम्।
स्वयोधै रक्षितस्यापि शयनं योगनिद्रया ॥७५ ॥
नाश्येत्कर्षयेच्छत्रून् दुर्गकण्टकमर्दनैः।
परदेशप्रवेशे च कुर्यादाटविकान्पुरः ॥७६ ॥
यत्र राजा तत्र कोशो विना कोशान्न राजता।
स्वभृत्येभ्यस्ततो दद्यात् को हि दातुर्न युध्यते ॥७७॥
न नरस्य नरो दासो दासस्त्वर्थस्य भूपते।
गौरवं लाघवं वाऽपि धनाधननिबन्धनम् ॥७८ ॥
अभेदेन च युध्येत रक्षेच्चैव परस्परम्।
फल्गु सैन्यं च यत्किंचिन्मध्ये व्यूहस्य कारयेत् ॥७९ ॥
पदातींश्च महीपालः पुरोऽनीकस्य योजयेत्।
उपरुध्यारिमासीत राष्ट्रं चास्योपपीडयेत् ॥८० ॥
स्यन्दनाश्वैः समे युध्येदनूपे नौद्विपैस्तथा।
वृक्षगुल्मावृते चापैरसिचर्मायुधैः स्थले ॥८१ ॥
दूषयेच्चास्य सततं यवसान्नोदकेन्धनम्।
भिन्द्याच्चैव तडागानि प्राकारान्पनिखांस्तथा ॥८२ ॥
बलेषु प्रमुखो हस्ती न तथाऽन्यो महीपतेः।
निजैरवयवैरेव मातङ्गोऽष्टायुधः स्मृतः ॥८३ ॥
बलमश्वस्य सैन्यानां प्राकारो जङ्गमो यतः।
तस्मादश्वाधिको राजा विजयी स्थलविग्रहे ॥८४॥
युध्यमाना हयारूढा देवानामपि दुर्जयाः।
अपि दूरस्थितास्तेषां वैरिणो हस्तवर्तिनः ॥८५ ॥

प्रथमं युद्धकारित्वं समस्तबलपालनम् ।
दिङ्मार्गाणां विशोधित्वं पत्तिकर्म प्रचक्षते ॥८६ ॥
स्वभावशूरमस्त्रज्ञमविरक्तं जितश्रमम् ।
प्रसिद्धक्षत्रियप्रायं बलं श्रेष्ठतमं विदुः ॥८७॥
यथा प्रभुकृतानमानाद्युध्यन्ते भुवि मानवाः ।
न तथा बहुभिर्दत्तैर्द्रविणैरपि भूपते ॥८८ ॥
वरमल्पबलं सारं न कुर्यान्मुण्डमण्डलीम् ।
कुर्यादसारभङ्गो हि सारभङ्गमपि स्फुटम् ॥८९ ॥
अप्रसादोऽनधिष्ठानं देयांशहरणं च यत् ।
कालयापोऽप्रतीकारस्तद्वैराग्यस्य कारणम् ॥९० ॥
आपीडयन्बलं शत्रोर्जिगीषुरतिशोषयेत् ।
सुखसाध्यं द्विषां सैन्यं दीर्घयानप्रपीडितम् ॥९१ ॥
दायादादपरो मन्त्रो नास्ति भेदकरो द्विषाम् ।
तस्मादुत्थापयेद्यत्नाद्दायादं तस्य विद्विषः ॥९२ ॥
संघाय युवराजेन यदि वा मुख्यमन्त्रिणा ।
अन्तःप्रकोपनं कार्यमभियोक्तुः स्थिरात्मनः ॥९३ ॥
क्रूर मित्रं रणे चापि भङ्गं दत्त्वा विघातयेत् ।
अथवा गोग्रहाकृष्ट्या तल्लक्ष्याश्रितबन्धनात् ॥९४ ॥
स्वराज्यं वासयेद्राजा परदेशावगाहनात् ।
अथवा दानमानाभ्यां वासितं धनदं हि तत् ॥९५ ॥
आत्मोदयः परग्लानिद्व
ँयं नीतिरितीयती ।

तदूरीकृत्य कृतिभिर्वाचस्पत्यं प्रतीयते ॥ ९६ ॥
अन्यदुच्छृङ्खलं सत्त्वमन्यच्छास्त्रनियन्त्रितम् ।
सामानाधिकरण्यं हि तेजस्तिमिरयोः कुतः ॥ ९७ ॥
परोऽपि हितवान् बन्धुर्बन्धुरप्यहितः परः ।
अहितो देहजो व्याधिर्हितमारण्यमौषधम् ॥ ९८ ॥
आसीद्वीवरवरो नाम शूद्रकस्य महीभृतः ।
सेवकः स्वल्पकालेन स ददौ सुतमात्मनः ॥ ९९ ॥
धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् ।
सन्निमित्ते वरं त्यागो विनाशे नियते सति ॥ १०० ॥
जीवन्ति च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः ।
अनेन सदृशो लोके न भूतो न भविष्यति ॥ १०१ ॥
प्रियं ब्रूयादकृपणः शूरः स्यादविकत्थनः ।
दाता नापात्रवर्षी च प्रगल्भः स्यादनिष्ठुरः ॥ १०२ ॥
योऽकार्यं कार्यवच्छास्ति स किंमन्त्री नृपेच्छया ।
वरं स्वामिमनोदुःखं तन्नाशो न त्वकार्यतः ॥ १०३ ॥
वैद्यो गुरुश्च मन्त्री च यस्य राज्ञः प्रियः सदा ।
शरीरधर्मकोशेभ्यः क्षिप्रं स परिहीयते ॥ १०४ ॥
पुण्याल्लब्धं यदेकेन तन्ममापि भविष्यति ।
हत्वा भिक्षुं महालोभान्निध्यर्थी नापितो हतः ॥ १०५ ॥
पुरावृत्तकथोद्गारैः कथं निर्णीयते परः ।
स्यान्निष्कारणबन्धुर्वा किं वा विश्वासघातकः ॥ १०६ ॥
लुब्धः क्रूरोऽलसोऽसत्यः प्रमादी भीरुरस्थिरः ।

मूढो योधावमन्ता च सुखच्छेद्यो रिपुः स्मृतः ॥१०७॥
दीर्घवर्त्मपरिश्रान्तं नद्यद्रिवनसंकुलम् ।
घोराग्निभयसंत्रस्तं क्षुत्पिपासार्दितं तथा ॥१०८॥
प्रमत्तं भोजनव्यग्रं व्याधिदुर्भिक्षपीडितम् ।
असंस्थितमभूयिष्ठं वृष्टिवातसमाकुलम् ॥१०९॥
पङ्कपांशुजलाच्छन्नं सुव्यस्तं दस्युविद्रुतम् ।
एवंभूतं महीपालः परसैन्यं विघातयेत् ॥११०॥
अवस्कन्दभयाद्राजा प्रजागरकृतश्रमम् ।
दिवासुप्तं समाहन्यान्निद्रव्यकुलसैनिकम् ॥१११॥
न राज्यं प्राप्तमित्येवं वर्तितव्यमसांप्रतम् ।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥११२॥
दक्षः श्रियमधिगच्छति पथ्याशी कल्यतां सुखमरोगी ।
अभ्यासी विद्यान्तं धर्मार्थयशांसि च विनीतः ॥११३॥
अविद्वानपि भूपालो विद्यावृद्धोपसेवया ।
परां श्रियमवाप्नोति जलासन्नतरुर्यथा ॥११४॥
पानं स्त्री मृगया द्यूतमर्थदूषणमेव च ।
वाग्दण्डयोश्च पारुष्यं व्यसनानि महीभुजाम् ॥११५॥
न साहसैकान्तरसानुवर्तिना
न चाप्युपायोपहतान्तरात्मना ।
विभूतयः शक्यमवाप्तुमूर्जिता
नये च शौर्ये च वसन्ति संपदः ॥११६॥
दुर्मन्त्रिणं किमुपयन्ति न नीतिदोषाः

संतापयन्ति कमपथ्यभुजं न रोगाः।
कं श्रीर्न दर्पयति कं न निहन्ति मृत्युः
कं स्त्रीकृता न विषयाः परितापयन्ति॥११७॥
मुदं विषादः शरदं हिमागम-
स्तमो विवस्वान् सुकृतं कृतघ्नता।
प्रियोपपत्तिः शुचमापदं नयः॥११८॥
यस्य नास्ति स्वयंप्रज्ञा शास्त्रं तस्य करोति किम्।
लोचनाभ्यां विहीनस्य दर्पणः करिष्यति॥११९॥
देवतासु गुरौ गोषु राजसु ब्राह्मणेषु च।
नियन्तव्यः सदा कोपो बालवृद्धातुरेषु च॥१२०॥
मन्त्रिणां भिन्नसंधाने भिषजां सांनिपातिके।
कर्मणि व्यज्यते प्रज्ञा सुस्थे को वा न पण्डितः॥१२१॥
आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च।
महारम्भाः कृतधियस्तिष्ठन्ति च निराकुलाः॥१२२॥
यः काकिनीमप्यपथप्रपन्नां
समुद्धरेन्निष्कसहस्रतुल्याम्।
कालेषु कोटिष्वपि मुक्तहस्त-
स्तं राजसिंहं न जहाति लक्ष्मीः॥१२३॥
ऋतौ विवाहे व्यसने रिपुक्षये
यशस्करे कर्मणि मित्रसंग्रहे।
प्रियासु नारीष्वधनेषु बान्धवे-
ष्वतिव्ययो नास्ति नराधिपाष्टसु॥१२४॥

मूर्खः स्वल्पव्ययत्रासर्वनाशं करोति हि।
कः सुधीः संत्यजेद्भाण्डं शुल्कस्यैवातिसाध्वसात् ॥ १२५ ॥
परस्परज्ञाः संहृष्टास्त्यक्तुं प्राणान्सुनिश्चिताः ।
कुलीनाः पूजिताः सम्यग्विजयन्ते द्विषद्बलम् ॥ १२६ ॥
सुभटाः शीलसंपन्नाः संहताः कृतनिश्चयाः ।
अपि पञ्चशतं शूरा निघ्नन्ति रिपुवाहिनीम् ॥ १२७ ॥
शिष्टैरप्यविशेषज्ञ उग्रश्च कृतनाशकः ।
त्यज्यते किं पुनर्नान्यैर्यश्चाप्यात्मम्भरिर्नरः ॥ १२८ ॥
सत्यं शौर्यं दया त्यागो नृपस्यैते महागुणाः ।
एभिर्मुक्तो महीपालः प्राप्नोति खलु वाच्यताम् ॥ १२९ ॥
यो येन प्रतिबद्धः स्यात्सह तेनोदयी व्ययी ।
स विश्वस्तो नियोक्तव्यः प्राणेषु च धनेषु च ॥ १३० ॥
धूर्तः स्त्री वा शिशुर्यस्य मन्त्रिणः स्युर्महीपतेः ।
अनीतिपवनक्षिप्तः कार्याब्धौ स निमज्जति ॥ १३१ ॥
हर्षक्रोधौ समौ यस्य शास्त्रार्थे प्रत्ययस्तथा ।
नित्यं भृत्यानुपेक्षा च तस्य स्याद्धनदा धरा ॥ १३२ ॥
येषां राज्ञा सह स्यातामुच्चयापचयौ ध्रुवम् ।
अमात्या इति तान्राजा नावमन्येत्कदाचन ॥ १३३ ॥
महीभुजो मदान्धस्य संकीर्णस्येव दन्तिनः ।
स्खलतो हि करालम्बः सुहृत्सचिवचेष्टितम् ॥ १३४ ॥
विषमो हि यथा नक्रः सलिलान्निर्गतोऽवशः ।
वनाद्विनिर्गतः शूरः सिंहोऽपि स्याच्छृगालवत् ॥ १३५ ॥

पुरस्कृत्य बलं राजा योधयेदवलोकयन्।
स्वामिनाधिष्ठितः श्वापि किं न सिंहायते ध्रुवम्॥१३६॥
अकालसहमत्यल्पं मूर्खव्यसनिनायकम्।
अगुप्तं भीरुयोधं च दुर्गव्यसनमुच्यते॥१३७॥
उपजापश्चिरारोधोऽवस्कन्दस्तीव्रपौरुषम्।
दुर्गस्य लङ्घनोपायाश्चत्वारः कथिता इमे॥१३८॥
सुमन्त्रितं सुविक्रान्तं सुयुद्धं सुपलायितम्।
कार्यकाले यथाशक्ति कुर्यान्न तु विचारयेत्॥१३९॥
दाता क्षमी गुणग्राही स्वामी दुःखेन लभ्यते।
शुचिर्दक्षोऽनुरक्तश्च जाने भृत्योऽपि दुर्लभः॥१४०॥
यदि समरमपास्य नास्ति मृत्यो-
र्भयमिति युक्तमितोऽन्यतः प्रयातुम्।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा मलिनं यशः क्रियेत॥१४१॥
भवेऽस्मिन्पवनोद्भ्रान्तवीचिविभ्रमभङ्गुरे।
जायते पुण्ययोगेन परार्थे जीवितव्ययः॥१४२॥
स्वाम्यमात्यश्च राष्ट्रं च दुर्गं कोशो बलं सुहृत्।
राज्याङ्गानि प्रकृतयः पौराणां श्रेणयोऽपि च॥१४३॥
प्रकृतिः स्वामिनं त्यक्त्वा समृद्धापि न जीवति।
अपि धन्वन्तरिर्वैद्यः किं करोति गतायुषि॥१४४॥
नरेशे जीवलोकोऽयं निमीलति निमीलति।
उदेत्युदीयमाने च रवाविव सरोरुहम्॥१४५॥

जनयन्ति सुतान् गावः सर्वा एव गवाकृतीन्।
विषाणोल्लिखितस्कन्धं काचिदेव गवां पतिम्॥१४६॥
आहवेषु च ये शूराः स्वाम्यर्थे त्यक्तजीविताः।
भर्तृभक्ताः कृतज्ञाश्च ते नराः स्वर्गगामिनः॥१४७॥
यत्र तत्र हतः शूरः शत्रुभिः परिवेष्टितः।
अक्षयाँल्लभते लोकान् यदि क्लैब्यं न गच्छति॥१४८॥
विग्रहः करितुरङ्गपत्तिभि-
र्नो कदापि भवतां महीभुजाम्।
नीतिमन्त्रपवनैः समावहृताः
संश्रयन्तु गिरिगह्वरं द्विषः॥१४९॥
इतिश्री हितोपदेशे विग्रहो नाम तृतीयः कथासंग्रहः समाप्तः।
॥सन्धिः॥
वृत्ते महति संग्रामे राज्ञोर्निहतसेनयोः।
स्थेयाभ्यां गृध्रचक्राभ्यां वाचा संधिः कृतः क्षणात्॥१॥
अपराधः स दैवस्य न पुनर्मन्त्रिणामयम्।
कार्यं सुचरितं क्वापि दैवयोगाद्विनश्यति॥२॥
विषमां हि दशां प्राप्य दैवं गर्हयते नरः।
आत्मनः कर्मदोषांश्च नैव जानात्यपण्डितः॥३॥
सुहृदां हितकामानां यो वाक्यं नाभिनन्दति।
स कूर्म इव दुर्बुद्धिः काष्ठाद्भ्रष्टो विनश्यति॥४॥
अनागतविधाता च प्रत्युत्पन्नमतिस्तथा।
द्वावेतौ सुखमेधेते यद्भविष्यो विनश्यति॥५॥

उत्पन्नामापदं यस्तु समाधत्ते स बुद्धिमान्।
वणिजो भार्यया जारः प्रत्यक्षे निह्नुतो यथा॥६॥
यदभावि न तद्भावि भावि चेन्न तदन्यथा।
इति चिन्ताविषघ्नोऽयमगदः किं न पीयते॥७॥
उपायं चिन्तयन् प्राज्ञो ह्यपायमपि चिन्तयेत्।
पश्यतो बकमूर्खस्य नकुलैर्भक्षिताः प्रजाः॥८॥
प्रणयादुपकाराद्वा यो विश्वसिति शत्रुषु।
स सुप्त इव वृक्षाग्रात् पतितः प्रतिबुध्यते॥९॥
कृतकृत्यस्य भृत्यस्य कृतं नैव प्रणाशयेत्।
फलेन मनसा वाचा दृष्ट्या चैनं प्रहर्षयेत्॥१०॥
अविचारयतो युक्तिकथनं तुषखण्डनम्।
नीचेषूपकृतं राजन् बालुकास्विव मुद्रितम्॥११॥
नीचः श्लाघ्यपदं प्राप्य स्वामिनं हन्तुमिच्छति।
मूषिको व्याघ्रतां प्राप्य मुनिं हन्तु गतो यथा॥१२॥
भक्षयित्वा बहून्मत्स्यानुत्तमाधममध्यमान्।
अतिलोभाद्बकः पश्चान्मृतः कर्कटकग्रहात्॥१३॥
उपकर्त्राऽरिणा संधिर्न मित्रेणापकारिणा।
उपकारापकारौ हि लक्ष्यं लक्षणमेतयोः॥१४॥
अनागतवतीं चिन्तां कृत्वा यस्तु प्रहृष्यति।
स तिरस्कारमाप्नोति भग्नभाण्डो द्विजो यथा॥१५॥
मदोद्धतस्य नृपतेः संकीर्णस्येव दन्तिनः।
गच्छन्त्युन्मार्गयातस्य नेतारः खलु वाच्यताम्॥१६॥

यो हि धर्मं पुरस्कृत्य हित्वा भर्तुः प्रियाऽप्रिये।
अप्रियाण्याह तथ्यानि तेन राजा सहायवान्॥१७॥
सुहृद्बलं तथा राज्यमात्मानं कीर्तिमेव च।
युधि संदेहदोलास्थं को हि कुर्यादबालिशः॥१८॥
संधिमिच्छेत् समेनापि संदिग्धो विजयो युधि।
सुन्दोपसुन्दावन्योन्यं नष्टौ तुल्यबलौ न किम्॥१९॥
वर्णश्रेष्ठो द्विजः पूज्यः क्षत्रियो बलवानपि।
धनधान्याधिको वैश्यः शूद्रस्तु द्विजसेवया॥२०॥
सत्यार्यौ धार्मिकोऽनार्यो भ्रातृसंघातवान् बली।
अनेकयुद्धविजयी संधेयाः सप्त कीर्तिताः॥२१॥
सत्योऽनुपालयेत् सत्यं संधितो नैति विक्रियाम्।
प्राणबाधेऽपि सुव्यक्तमार्यो नायात्यनार्यताम्॥२२॥
धार्मिकस्याभियुक्तस्य सर्व एव हि युध्यते।
प्रजानुरागाद्धर्माच्च दुःखोच्छेद्यो हि धार्मिकः॥२३॥
संधिः कार्योऽप्यनार्येण विनाशे समुपस्थिते।
विना तस्याश्रयेणार्यो न कुर्यात् कालयापनम्॥२४॥
संहतत्वाद्यथा वेणुर्निविडैः कण्टकैर्वृतः।
न शक्यते समुच्छेत्तुं भ्रातृसंघातवांस्तथा॥२५॥
बलिना सहि योद्धव्यमिति नास्ति निदर्शनम्।
प्रतिवातं न हि धनः कदाचिदुपसर्पति॥२६॥
जमदग्नेः सुतस्येव सर्वः सर्वत्र सर्वदा।
अनेकयुद्धजयिनः प्रतापादेव भुज्यते॥२७॥

अनेकयुद्धविजयी संधानं यस्य गच्छति।
तत्प्रतापेन तस्याशु वशमायान्ति शत्रवः ॥ २८ ॥
बालो वृद्धो दीर्घरोगी तथा ज्ञातिबहिष्कृतः।
भीरुको भीरुजनको लुब्धो लुब्धजनस्तथा ॥ २९ ॥
विरक्तप्रकृतिश्चैव विषयेष्वतिसक्तिमान्।
अनेकचित्तमन्त्रस्तु देवब्राह्मणनिन्दकः ॥ ३० ॥
दैवोपहतकश्चैव तथा दैवपरायणः।
दुर्भिक्षव्यसनोपेता बलव्यसनसंकुलः ॥ ३१ ॥
अदेशस्थो बहुरिपुर्युक्तः कालेन यश्चन।
सत्यधर्मव्यपेतश्च विंशतिः पुरुषा अमी ॥ ३२ ॥
एतैः संधिं न कुर्वीत विगृह्णीयात्तु केवलम्।
एते विगृह्यमाणा हि क्षिप्रं यान्ति रिपोर्वशम् ॥ ३३ ॥
बालस्याल्पप्रभावत्वान्न लोको योद्धुमिच्छति।
युद्धायुद्धफलं यस्माज्ज्ञातुं शक्तो न बालिशः ॥ ३४ ॥
उत्साहशक्तिहीनत्वाद्वृद्धो दीर्घामयस्तथा।
स्वैरेव परिभूयेते द्वावप्येतावसंशम् ॥ ३५ ॥
सुखोच्छेद्यो हि भवति सर्वज्ञातिबहिष्कृतः।
त एवैनं विनिघ्नन्ति ज्ञातयस्त्वात्मसात्कृताः ॥ ३६ ॥
भीरुर्युद्धपरित्यागात् स्वयमेव प्रणश्यति।
तथैव भीरुपुरुषः संग्रामे तैर्विमुच्यते ॥ ३७ ॥
लुब्धस्यासंविभागित्वान्न युध्यन्तेऽनुयायिनः।
लुब्धानुजीविकैरेष दानभिन्नैर्निहन्यते ॥ ३८ ॥

संत्यज्यते प्रकृतिभिर्विरक्तप्रकृतिर्युधि ।
सुखाभियोज्यो भवति विषयेष्वतिसक्तिमान् ॥ ३९ ॥
अनेकचित्तमन्त्रस्तु भेद्यो भवति मन्त्रिणा ।
अनवस्थितचित्तत्वात् कार्यतः स उपेक्ष्यते ॥ ४० ॥
सदा धर्मबलीयस्त्वाद्देवब्राह्मणनिन्दकः ।
विशीर्यते स्वयं ह्येष दैवोपहतकस्तथा ॥ ४१ ॥
संपत्तेश्च विपत्तेश्च दैवमेव हि कारणम् ।
इति दैवपरो ध्यायन् नात्मानमपि चेष्टते ॥ ४२ ॥
दुर्भिक्षव्यसनी चैव स्वयमेव विषीदति ।
बलव्यसनयुक्तस्य योद्धुं शक्तिर्न जायते ॥ ४३ ॥
अदेशस्थो हि रिपुणा स्वल्पकेनापि हन्यते ।
ग्राहोऽल्पीयानपि जले गजेन्द्रमपि कर्षति ॥ ४४ ॥
बहुशत्रुस्तु संत्रस्तः श्येनमध्ये कपोतवत् ।
येनैव गच्छति पथा तेनैवाशु विपद्यते ॥ ४५ ॥
अकालसैन्ययुक्तस्तु हन्यते कालयोधिना ।
कौशिकेन हतज्योतिर्निशीथ इव वायसः ॥ ४६ ॥
सत्यधर्मव्यपेतेन संदध्यान्न कदाचन ।
स संधितोऽप्यसाधुत्वादचिराद्याति विक्रियाम् ॥ ४७ ॥
या हि प्राणपरित्यागमूल्येनापि न लभ्यते ।
सा श्रीर्नीतिविदं पश्य चञ्चलापि प्रधावति ॥ ४८ ॥
वित्तं यदा यस्य समं विभक्तं
गूढश्चरः संनिभृतश्च मन्त्रः ।

न चाप्रियं प्राणिषु यो ब्रवीति
स सागरान्तां पृथिवीं प्रशास्ति ॥४९ ॥
सुगुप्तिमाधाय सुसंहतेन
बलेन वीरो विचरन्नरातिम्।
संतापयेद्येन समं सुतप्त-
स्तप्तेन संधानमुपैति तप्तः ॥५० ॥
विश्वासप्रतिपन्नानां वञ्चने का विदग्धता।
अङ्कमारुह्य सुप्तं हि हत्वा किं नाम पौरुषम् ॥५१ ॥
आत्मौपम्येन यो वेत्ति दुर्जनं सत्यवादिनम्।
स तथा वञ्च्यते धूर्तैर्ब्राह्मणश्छागतो यथा ॥५२ ॥
मतिर्दोलायते सत्यं सतामपि खलोक्तिभिः।
ताभिर्विश्वासितश्चासौ म्रियते चित्रकर्णवत् ॥५३ ॥
त्यजेत् क्षुधार्ता महिला स्वपुत्रं,
खादेत् क्षुधार्ता भुजगी स्वमण्डम्।
बुभुक्षितः किं न करोति पापं
क्षीणा नरा निष्करुणा भवन्ति ॥५४ ॥
मत्तः प्रमत्तश्चोन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः।
लुब्धो भीरुस्त्वरायुक्तः कामुकश्च न धर्मवित् ॥५५ ॥
न भूप्रदानं न सुवर्णदानं
न गोप्रदानं न तथाऽन्नदानम्।
यथा वदन्तीह महाप्रदानं
सर्वेषु दानेष्वभयप्रदानम् ॥५६ ॥

सर्वकामसमृद्धस्य अश्वमेधस्य यत्फलम्।
तत्फलं लभते सम्यग्रक्षिते शरणागते ॥५७॥
स्वामिमूला भवन्त्येव सर्वाः प्रकृतयः खलु।
समूलेष्वपि वृक्षेषु प्रयत्नः सफलो नृणाम् ॥५८॥
लोको वहति किं राजन् न मूर्ध्ना दग्धुमिन्धनम्।
क्षालयन्नपि वृक्षाङ्घ्रिं नदीवेगो निकृन्तति ॥५९॥
स्कन्धेनापि वहेच्छत्रून् कार्यमासाद्य बुद्धिमान्।
यथा वृद्धेन सर्पेण मण्डूका विनिपातिताः ॥६०॥
उत्सवे व्यसने युद्धे दुर्भिक्षे राष्ट्रविप्लवे।
राजद्वारे श्मशाने च यस्तिष्ठति स बान्धवः ॥६१॥
क्रोडीकरोति प्रथमं यथा जातमनित्यता।
धात्रीव जननी पश्चात्तथा शोकस्य कः क्रमः ॥६२॥
क्व गताः पृथिवीपालाः ससैन्यबलवाहनाः।
वियोगसाक्षिणी येषां भूमिरद्यापि तिष्ठति ॥६३॥
कायः संनिहितापायः संपदः पदमापदाम्।
समागमाः सापगमाः सर्वमुत्पादि भङ्गुरम् ॥६४॥
प्रतिक्षणमयं कायः क्षीयमाणो न लक्ष्यते।
आमकुम्भ इवाम्भस्थो विशीर्णः सन् विभाव्यते ॥६५॥
आसन्नतरतामेति मृत्युर्जन्तोर्दिने दिने।
आघातं नीयमानस्य वध्यस्येव पदे पदे ॥६६॥
अनित्यं यौवनं रूपं जीवितं द्रव्यसंचयः।
ऐश्वर्यं प्रियसंवासो मुह्येत्तत्र न पण्डितः ॥६७॥

यथा काष्ठं च काष्ठं च समेयातां महोदधौ।
समेत्य च व्यपेयातां तद्वद्भूतसमागमः ॥६८ ॥
यथा हि पथिकः कश्चिच्छायामाश्रित्य तिष्ठति।
विश्रम्य च पुनर्गच्छेत्तद्वद्भूतसमागमः ॥६९ ॥
पञ्चभिर्निर्मिते देहे पञ्चत्वं च पुनर्गते।
स्वां स्वां योनिमनुप्राप्ते तत्र का परिदेवना ॥७० ॥
यावन्तः कुरुते जन्तुः संबन्धान्मनसः प्रियान्।
तावन्तोऽपि निखन्यन्ते हृदये शोकशङ्कवः ॥७१ ॥
नायमत्यन्तसंवासो लभ्यते येन केनचित्।
अपि स्वेन शरीरेण किमुतान्येन केनचित् ॥७२ ॥
संयोगो हि वियोगस्य संसूचयति संभवम्।
अनतिक्रमणीयस्य जन्ममृत्योरिवागमम् ॥७३ ॥
आपातरमणीयानां संयोगानां प्रियैः सह।
अपथ्यानामिवान्नानां परिणामोऽतिदारुणः ॥७४ ॥
व्रजन्ति न निवर्तन्ते स्त्रोतांसि सरितां यथा।
आयुरादाय मर्त्यानां तथा रात्र्यहनी सदा ॥७५ ॥
सुखास्वादपरो यस्तु संसारे सत्समागमः।
स वियोगावसानत्वाद्दुःखानां धुरि युज्यते ॥७६ ॥
अत एव हि नेच्छन्ति साधवः सत्समागमम्।
यद्वियोगासिलूनस्य मनसो नास्ति भेषजम् ॥७७ ॥
सुकृतान्यपि कर्माणि राजभिः सगरादिभिः।
अथ तान्येव कर्माणि ते चाऽपि प्रलयं गताः ॥७८ ॥

संचिन्त्य संचिन्त्य तमुग्रदण्डं
मृत्युं मनुष्यस्य विचक्षणस्य।
वर्षाम्बुसिक्ता इव चर्मबन्धाः
सर्वे प्रयत्नाः शिथिलीभवन्ति ॥७९ ॥
यामेव रात्रिं प्रथमामुपैति
गर्भे निवासी नरवीरलोकः।
ततः प्रभृत्यस्खलितप्रयाणः
स प्रत्यहं मृत्युसमीपमेति ॥८० ॥
अज्ञानं कारणं न स्याद्वियोगो यदि कारणम्।
शोको दिनेषु गच्छत्सु वर्धतामपयाति किम् ॥८१ ॥
अकाण्डपातजातानां गात्राणां मर्मभेदिनाम्।
गाढशोकप्रहाराणामचिन्तैव महौषधिः ॥८२ ॥
वनेऽपि दोषाः प्रभवन्ति रागिणां
गृहेऽपि पञ्चेन्द्रियनिग्रहस्तपः।
अकुत्सिते कर्मणि यः प्रवर्तते
निवृत्तरागस्य गृहं तपोवनम् ॥८३ ॥
दुःखितोऽपि चरेद्धर्मं यत्र कुत्राश्रमे रतः।
समः सर्वेषु भूतेषु लिङ्गं धर्मकारणम् ॥८४॥
वृत्त्यर्थं भोजनं येषां संतानार्थं च मैथुनम्।
वाक् सत्यवचनार्थाय दुर्गाण्यपि तरन्ति ते ॥८५ ॥
आत्मा नदी संयमपुण्यतीर्था
सत्योदका शीतलतटा दयोर्मिः।

तत्राभिषेकं कुरु पाण्डुपुत्र
न वारिणा शुध्यति चान्तरात्मा ॥८६ ॥
जन्ममृत्युजराव्याधिवेदनाभिरुपद्रुतम् ।
संसारमिममुत्पन्नमसारं त्यजतः सुखम् ॥८७॥
दुःखमेवास्ति न सुखं यस्माद्यदुपलक्ष्यते ।
दुःखार्तस्य प्रतीकारे सुखसंज्ञा विधीयते ॥८८ ॥
सङ्गः सर्वात्मना त्याज्यः स चेत्त्यक्तुं न शक्यते ।
स सद्भिः सह कर्तव्यः सतां सङ्गो हि भेषजम् ॥८९ ॥
कामः सर्वात्मना हेयः स चेद्धातुं न शक्यते ।
स्वभार्यां प्रति कर्तव्यः सैव तस्य हि भेषजम् ॥९० ॥
न शरन्मेघवत् कार्यं वृथैव धनगर्जितम् ।
परस्यार्थमनर्थं व प्रकाशयति नो महान् ॥९१ ॥
एकदा न विगृह्णीयाद् बहून् राजाभिघातिनः ।
सदर्पोऽप्युरगः कीटैर्बहुभिर्नाश्यते ध्रुवम् ॥९२ ॥
योऽर्थतत्त्वमविज्ञाय क्रोधस्यैव वशं गतः ।
स तथा तप्यते मूढो ब्राह्मणो नकुलाद्यथा ॥९३ ॥
आदानस्य प्रदानस्य कर्तव्यस्य च कर्मणः ।
क्षिप्रमक्रियमाणस्य कालः पिबति तद्रसम् ॥९४ ॥
कामः क्रोधस्तथा मोहो लोभो मानो मदस्तथा ।
षड्वर्गमुत्सृजेदेनमस्मिंस्त्यक्ते सुखी नृपः ॥९५ ॥
स्मृतिश्च परमार्थेषु वितर्को ज्ञाननिश्चयः ।
दृढता मन्त्रगुप्तिश्च मन्त्रिणः परमो गुणः ॥९६ ॥

सहसा विदधीत न क्रिया-
मविवेकः परमापदां पदम्।
वृणुते हि विमृश्यकारिणं
गुणलुब्धाः स्वयमेव संपदः ॥९७॥
यद्यप्युपायाश्चत्वारो निर्दिष्टाः साध्यसाधने।
संख्यामात्रं फलं तेषां सिद्धिः साम्नि व्यवस्थिता ॥९८॥
अज्ञः सुखमाराध्यः सुखतरमाराध्यते विशेषज्ञः।
ज्ञानलवदुर्विदग्धं ब्रह्मापि नरं न रञ्जयति ॥९९॥
कर्मानुमेयाः सर्वत्र परोक्षगुणवृत्तयः।
तस्मात् परोक्षवृत्तीनां फलैः कर्मानुभाव्यते ॥१००॥
सरसि बहुशस्ताराच्छाये क्षणात्परिवञ्चितः
कुमुदविटपान्वेषी हंसो निशास्वविचक्षणः।
न दशति पुनस्ताराशङ्की दिवापि सितोत्पलं
कुहकचकितो लोकः सत्येऽप्यपायमपेक्षते ॥१०१॥
दुर्जनदूषितमनसः सुजनेष्वपि नास्ति विश्वासः।
बालःपायसदग्धो दध्यपि फूत्कृत्य भक्षयति ॥१०२॥
लुब्धमर्थेन गृह्णीयात् स्तब्धमञ्जलिकर्मणा।
मूर्खं छन्दानुरोधेन याथातथ्येन पण्डितम् ॥१०३॥
सद्भावेन हरेन्मित्रं संभ्रमेण तु बान्धवान्।
स्त्रीभृत्यौ दानमानाभ्यां दाक्षिण्येनेराञ्जनान् ॥१०४॥
बलीयसाऽभियुक्तस्तु नृपो नान्यप्रतिक्रियः।
आपन्नः संधिमन्विच्छेत् कुर्वाणः कालयापनम् ॥१०५॥

कपाल उपहारश्च संतानः संगतस्तथा।
उपन्यासः प्रतीकारः संयोगः पुरुषान्तरः ॥१०६॥
अदृष्टनर आदिष्ट आत्मादिष्ट उपग्रहः।
परिक्रयस्तथोच्छन्नस्तथा च परभूषणः ॥१०७॥
स्कन्धोपनेयः संधिश्च षोडशैते प्रकीर्तिताः।
इति षोडशकं प्राहुः संधिं संधिविचक्षणाः ॥१०८॥
कपालसंधिर्विज्ञेयः केवलं समसंधितः।
संप्रदानाद्भवति य उपहारः स उच्यते ॥१०९॥
संतानसंधिर्विज्ञेयो दारिकादानपूर्वकः।
सद्भिस्तु संगतः संधिर्मैत्रीपूर्व उदाहृतः ॥११०॥
यावदायुःप्रमाणस्तु समानार्थप्रयोजनः।
संपत्तौ वा विपत्तौ वा कारणैर्यो न भिद्यते ॥१११॥
संगतः संधिरेवायं प्रकृष्टत्वात् सुवर्णवत्।
तथाऽन्यैः संधिकुशलैः काञ्चनः स उदाहृतः ॥११२॥
आत्मकार्यस्य सिद्धिं तु समुद्दिश्य क्रियेत यः।
स उपन्यासकुशलैरुपन्यास उदाहृतः ॥११३॥
मयाऽस्योपकृतं पूर्वं ममाप्येष करिष्यति।
इति यः क्रियते संधिः प्रतीकारः स उच्यते ॥११४॥
उपकारं करोम्यस्य ममाप्येष करिष्यति।
अयं चाऽपि प्रतीकारो रामसुग्रीवयोरिव ॥११५॥
एकार्थों सम्यगुद्दिश्य क्रियां यत्र हि गच्छति।
सुसंहितप्रमाणस्तु स च संयोग उच्यते ॥११६॥

आवयोर्योधमुख्यैस्तु मदर्थः साध्यतामिति।
यस्मिन्पणस्तु क्रियते स संधिः पुरुषान्तरः ॥११७॥
त्वयैकेन मदीयोऽर्थः संप्रसाध्यस्त्वसाविति।
यत्र शत्रुः पणं कुर्यात् सोऽदृष्टपुरुषः स्मृतः ॥११८॥
यत्र भूम्येकदेशेन पणेन रिपुरूर्जितः।
संधीयते संधिविद्भिः स चादिष्ट उदाहृतः ॥११९॥
स्वसैन्येन तु संधानमात्मादिष्ट उदाहृतः।
क्रियते प्राणरक्षार्थं सर्वदानादुपग्रहः ॥१२०॥
कोशांशेनार्धकोशेन सर्वकोशेन वा पुनः।
शिष्टस्य प्रतिरक्षार्थं परिक्रय उदाहृतः ॥१२१॥
भुवां सारवतीनां तु दानादुच्छिन्न उच्यते।
भूम्युत्थफलदानेन सर्वेण परभूषणः ॥१२२॥
परिच्छिन्नं फलं यत्र प्रतिस्कन्धेन दीयते।
स्कन्धोपनेयं तं प्राहुः संधिं संधिविचक्षणाः ॥१२३॥
परस्परोपकारस्तु मैत्री संबन्धकस्तथा।
उपहारश्च विज्ञेयाश्चत्वारश्चैव संधयः ॥१२४॥
एक एवोपहारस्तु संधिरेव मतो मम।
उपहारविभेदास्तु सर्वे मैत्र्यविवर्जिताः ॥१२५॥
अभियोक्ता बलियस्त्वादलब्ध्वा न निवर्तते।
उपहारादृते तस्मात् संधिरन्यो न विद्यते ॥१२६॥
आधिव्याधिपरीतापादद्य श्वो वा विनाशिने।
को हि नाम शरीराय धर्मापेतं समाचरेत् ॥१२७॥

जलान्तश्चन्द्रचपलं जीवितं खलु देहिनाम्।
तथाविधमिति ज्ञात्वा शश्वत् कल्याणमाचरेत्॥१२८॥
मृगतृष्णासमं वीक्ष्य संसारं क्षणभङ्गुरम्।
सज्जनैः संगतं कुर्याद्धर्माय च सुखाय च॥१२९॥
अश्वमेधसहस्राणि सत्यं च तुलया कृतम्।
अश्वमेधसहस्राद्धि सत्यमेवातिरिच्यते॥१३०॥
संधिः सर्वमहीभुजां विजयिनामस्तु प्रमोदः सदा
सन्तः सन्तु निरापदः सुकृतिनां कीर्तिश्चिरं वर्धताम्।
नीतिर्वारविलासिनीव सततं वक्षःस्थले संस्थिता
वक्त्रं चुम्बतु मन्त्रिणामहरहर्भूयान्महानुत्सवः॥१३१॥
प्रालेयाद्रेः सुतायाः प्रणयनिवसतिश्चन्द्रमौलिः स याव-
द्यावल्लक्ष्मीर्मुरारेर्जलद इव तडिन्मानसे विस्फुरन्ती।
यावत् स्वर्णाचलोऽयं दवदहनसमो यस्य सूर्यः स्फुलिङ्ग-
स्तावन्नारायणेन प्रचरतुरचितः संग्रहोऽयं कथानाम्॥१३२॥
श्रीमान् धवलचन्द्रोऽसौ जीयात् माण्डलिको रिपून्।
येनायं संग्रहो यत्नाल्लेखयित्वा प्रचारितः॥१३३॥

॥इतिश्री हितोपदेशे संधि प्रकरणे समाप्तम्॥

★संपूर्णोऽयं ग्रन्थ★

